जगदुन्मेषकाभावम् । किं च यश्चोद्भावितो जगत्कर्ता कथं न तस्यापि कश्चित्कर्तोद्भावनीयः ? दृश्यते हि जगति घटस्य निर्माता तस्यापि कश्चिज्जनकस्तस्याप्यपरः । एवं परम्परा प्रचलति । यदि भवप्रभावको नित्यः कथं न निखिलं जगदिदं नित्यम् ? यदि स स्वयम्भूर्जगतोपि कथं न तथात्वम् ? विनाशं गच्छदवेक्ष्यतेक्षिमद्भिर्जगत्प्रतिक्षणमितिनास्ति तस्य नित्यत्वम्, कर्तृसापेक्षमेवाद्यावधि घटपटमठाद्यवलोकितं तेन न जगतो जगद्वस्तुजातस्य च स्वयंसिद्धत्वमित्युच्यते चेद्धन्त नित्यत्वस्य शपथैकप्रत्यायनीयतया ब्रह्मण्यपि तथोक्तेरवकाशः काशत एव । किं च निरस्तसमस्तप्रपञ्चप्रत्यवायं परिपूर्णं ब्रह्म कुत इदं सर्वथापूर्णं विश्वं घटयितुं विघटयितुं च सङ्कल्पं कल्पयेत ? न तन्निष्प्रपञ्चं ब्रह्मास्मिन्कुतूहलिनि कार्ये प्रवृत्तं प्रवृत्तं च यत्तन्मायोपाधिसाधितमवरं ब्रह्मेति चेद्धास्यास्पदमेवैतत् । न हि माया ब्रह्मावरीतुं प्रभवेत् । निर्विकारे विकारमाधातुं को नाम क्षमताम् ? ननु नायं वास्तविको विकार इति ब्रूषे चेत्, कः खलु निर्णयोपायो वास्तविकावास्तविकत्वयोस्तस्य ? न हि तत्प्रतीतिमत्, येन तस्य निर्विकारतां निश्चिनुयान्निखिलं जगत् । विकारश्च प्रत्यक्ष एव चराचरस्वरूपः । एवं च निर्विकारताप्रसाधनेन ब्रह्म प्रसाधयितुं तत्सत्तां साधयितुं च साधनाभावः स्फुटं स्फुरति । न च न स्तो वस्तुतो जीवेश्वरौ ब्रह्मविकृतिपरिचायकौ येन ब्रह्म विकारमालम्बेत, कल्पितावेव तौ भ्रान्तिभूमिभुग्भिः । कल्पना च काचनापि न निरधिष्ठाना भवितुमर्हति । यच्च तद-

धिष्ठानं तदेव मायाच्छायाविरहितं सर्वद्वन्द्वातीतं ब्रह्मेति चेदिदमप्यसाध्वेव। न निरधिष्ठाना कल्पना सत्तामधितनुत इति क्वावलोकितम्? रज्जुसर्प इति चेद्बाढम्। समानेधिष्ठाने हि सा कल्पना नासमाने। न हि रज्जौ केनापि कुत्रापि सिंहभ्रमोभिभूतः। न वा कदाचित्कस्यचिच्चूते रजतभ्रान्तिः। जड एव च सा जडभ्रान्तिः। असमानं हि ब्रह्म चेतनं चापि। सर्वथासमाने तस्मिंश्चेतने न स्यादसमानानां घटपटादीनामचेतनानां भ्रमः। एवं च नास्ति कश्चन समन्वयः। कथं तर्हि प्रस्तुतसूत्रस्य चारितार्थ्यं समर्थनीयम्?

यच्च "संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्" "प्रत्यक्षप्रवृत्तत्वात्संज्ञाकर्मणः" (वैशे०द०२।१।१८–१९) इतिसूत्राभ्यां सर्वकल्याणयुजा कणभुजा संज्ञाकर्मणी ईश्वरसत्त्वस्य प्रतिपादिके इति प्रतिपादितं यच्च तमेवानुसृत्योदयनाचार्येण "कार्यत्वान्निरुपाधित्वमेवं धृतिविनाशयोः। विच्छेदेन पदस्यापि प्रत्ययादेश्च पूर्ववत्" (कुसु०५।५) इत्यादिना सर्वेषां घटादिव्यवहाराणां मध्यागतेन प्रलयेन विच्छिन्नत्वादपरसर्गारम्भे व्यवहारदर्शकाभावात्सर्गाद्यकालीनघटादिव्यवहाराणां प्रवर्तकत्वेनेश्वरः साधितः; यच्च "दृष्टानां दृष्टप्रयोजनानां दृष्टाभावे प्रयोगोऽभ्युदयाय" "तद्वचनादाम्नायस्य प्रामाण्यमिति" (वैशे० १०।२।८–९) इतिसूत्राभ्यां भगवता कणादेनाम्नायप्रामाण्यं द्रढयता वेदवक्तृत्वेनेश्वरः समुपस्थापितः स्थापितश्च तत्सर्वमतीतकालगुहावतमसावगुण्ठितानामतिकुण्ठितमेधसामुक्तिरितिसंक्षे-

पेण तद्विचारः क्रियते। संज्ञाकर्मदर्शनादीश्वरसिद्धिरिति प्रथमं विचार्यते। अग्निवाय्वादित्यादीनामनन्तानां पदार्थानां व्यवह्रियमाणानि नामानि न मनुष्यकल्पितानि भवितुमर्हन्ति। अल्पज्ञतयाल्पशक्तितया च साकल्येन पदार्थज्ञाने मनुष्याणामसामर्थ्यम्। पदार्थज्ञानाभावे नामधेयानारम्भः स्यादित्यादि यदुक्तं तन्न विचारसहम्। न हि वेदेषु क्काप्युक्तमेतेन शब्देनायमर्थो ग्रहीतव्य इति। "अग्निमीडे" इत्यादिना न हि ज्वलत्पावकस्याग्निरितिसंज्ञा वेदितव्येत्यभिहितम्। सिद्धानुवाद एव सः। "अस्ति कश्चित्पूर्वसिद्धोनादिकालतः प्रख्यातश्चाग्निदेवस्तमीडे" इत्येव तस्यार्थः। परःसहस्राणां पदार्थानां संज्ञा नोपलभ्यन्ते वेदेषु। सम्पादिताश्च ता आवरकालिकैरनुभविभिर्विद्वद्भिः। आम्रनिम्बजम्बुकजम्बीरबदरिकादीनामनेकेषां पदार्थानामपि नामानि नावेक्ष्यन्ते तत्र। यच्चाश्वमेधराजसूयादीनां कर्मणां नामानि श्रूयन्ते न तानीश्वरेण दत्तानि दत्तानि च तानि ब्राह्मणग्रन्थप्रणेतृभिर्याज्ञवल्क्यदिभिर्महर्षिभिः कर्मठशिरोमणिभिः। अनेकेषां कृमिकीटपतङ्गादीनां नक्षत्राणां देवयोनीनां गन्धर्वादीनामभिधानानि न श्रूयन्ते वेदेषु। पश्चाद्भवैर्व्यवहारिभिर्मनुष्यैरेव तानि सर्वाणि नामान्यकल्प्यन्त। अधुनापि विभिन्नशस्त्रास्त्रादीनां प्रत्यहमभिधानानि संस्कुर्वाणा मनुष्या एव दृश्यन्ते। एवं न संज्ञाकर्मणी ईश्वरसाधिके। एवं "कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः। वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः॥" (कुसु० ५।१) इत्यत्रान्यत्र च क्षित्यादि सकर्तृकं

कार्यत्वाद्घटवत्, सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्नपूर्वकं कर्मत्वादस्मदादिशरीरक्रियावत्, ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितं धृतिमत्त्वात्, ब्रह्माण्डादि प्रयत्नवद्विनाश्यं विनाशित्वात्पाट्यमानपटवत्, पटादिसम्प्रदायव्यवहारः स्वतन्त्रपुरुषप्रयोज्यो व्यवहारत्वात् आधुनिकलिप्यादिव्यवहारवत्, वेदजन्यज्ञानं प्रमात्वघटितधर्मावच्छिन्नकार्यताप्रतियोगिकारणजन्यं प्रमात्वात्प्रत्यक्षादिप्रमावत्, इत्यादयः सर्वेऽप्यनुमानप्रयोगा निरर्थका दुरर्थका अननुभूतपरमार्थकाश्च। तथापि वेदान्तशास्त्रमिदम्। नात्र भगवान्बादरायणस्तर्कमाशिश्रियत्। न हीश्वरस्तर्कगम्यः। तर्काणां प्राकृतिकेषु पदार्थेष्वेव गतिर्नाप्राकृतिके पारमार्थिके ब्रह्मणि। किञ्चिदनुमित्सया प्रवृत्तः पुरुषो लिङ्गमेव प्रथमं जिघृक्षति। लिङ्गाभावादनुमित्यभावः। नहि परमात्मानमाश्रयन्तीमनुमितिं दृष्टं लिङ्गं साधयेत्। दृष्टेन लिङ्गेन दृष्टमेव दृश्यमेव वा सिध्येन्नादृष्टमदृश्यं वा वस्तु। क्षित्यादीनां सकर्तृकत्वसाधने जन्यत्वहेतुरहेतुरेव। न हि क्षित्यादीनां जन्यत्वमद्यापि सिद्धम्। न तार्किकेण जायमानाः क्षित्यादयोऽवलोकिताः। कथं तर्हि तेषां जन्यत्वमूरीकृतम्? द्यावाभूमी जनयन्देव एक इति श्रुत्यावगतं जन्यत्वं तेषामिति चेच्चिरं जीव। श्रुतिमेव भगवतीं शरणं कुरु। जन्यघटदृष्टान्तेन जन्यत्वहेतुना कुलालादिवज्जन्य एव कर्ता सिध्येदवयववांश्च। न स तवापीष्टः। अद्वैतिमते मायाकल्पितत्वेनेश्वरस्य कथञ्चिज्जन्यत्वस्वीकारेऽपि शरीरित्वास्वीकार्यत्वात्,

विशिष्टाद्वैतिमते शरीरित्वाङ्गीकारेपि ब्रह्मणो जन्यत्वानङ्गीकार्यत्वात्सर्वैरनुपादेयतया तस्य तर्कस्य सर्वथानुपादेयतैव सिध्यति। कुसुमाञ्जलिस्थितानुमानप्रयोगा अपि न योगक्षेमवहाः। सर्गः परमाणुसंयोगजन्यो न वेत्यत्रानध्यनिर्णीतमेव। न हि ब्रह्माण्डादि केनापि पतनप्रतिबन्धकीभूतप्रयत्नवताधिष्ठितम्। नव्यमते प्रत्येकपदार्थनिष्ठाकर्षणप्रत्याकर्षणशक्त्यैव तस्यावस्थितिः। न तत्र कश्चन प्रयत्नवानपेक्ष्यते। यदि ब्रह्माण्डं विनाशि प्रयत्नं प्रयत्नवन्तं चान्तरेणैव विनश्येत्। पटोपि चिररक्षितो विनश्यत्येव। न हि पटरक्षणं पटविनाशी प्रयत्नः। अनाशाय रक्षितोप्यसौ विनाश्यधर्मत्वाद्विनश्यत्येव। पटादिव्यवहारोपि न केवलं स्वतन्त्रपुरुषप्रयोज्यः। अस्वतन्त्रा अपि पुरुषाः पटादिकं पटादिनाम्नैव व्यवहरन्ति। भगवत्परतन्त्रैरप्यमरीकावासिभिर्विज्ञानविचक्षणैरणुवम्बेतिनाम्ना नियतं स्फोटकद्रव्यं व्यवह्रियते। पराधीनेपि देशे भारते पराधीनेन गांधिमहात्मनान्त्यजा हरिजनेतिसंज्ञया व्यवह्रियन्ते। अतो नात्र दर्शने तर्कप्रसरः। शब्दप्रामाणिको हि भगवान्व्यासः। यच्छब्द आह तदेव तस्य प्रमाणम्। अत एव च नोदपादीयं केनापि सृष्टिरतो नित्यैवेत्यादिमतश्रद्धासरितमवगाहमानानां मेधाजुषां विदुषां नात्र प्रसरावसर इति स्पष्टमेव ॥ १।१।४॥ इति समन्वयाधिकरणम् ॥४॥

(अथेक्षत्यधिकरणम् ॥५॥)

एवं च वेदसिद्धं ब्रह्मैव जगज्जन्मादिहेतुरिति वेदान्तसिद्धान्तः। तच्च विशुद्धं वा मायोपाधिकं वेत्यन्यदेतत्। उपादानमपि

ब्रह्मैव । अचिदपरपर्यायप्रकृतिद्वारेणेति केचित्, माययेत्यन्ये। गौतमानुयायिनः काणादाश्च परमाणूनां जगदुपादानतां प्रतिजानते न ब्रह्मणः । "धमति सं पतत्रैः" (ऋ०१०।८१।३) इत्यृचि पतत्रशब्देन "असतः सदजायत" (ऋ०१०। ७२।२) इत्यत्र चासच्छब्देन परमाणव एवोच्यन्त इति तन्मतम् । प्रधानमेवोपादानमिति कापिलाः । इत्येवं विवदमानानामपि तन्त्राणां नोपादानं ब्रह्म साक्षादित्यत्रैकमत्यमेव । न हि माया प्रधानतो नितरां भिद्यते। अनुगामिन्येव माया प्रधानस्य । सत्त्वरजस्तमोरूपा प्रकृतिरेव प्रधानम् । मायाविद्ययोरपि तदेव रूपम् । शुद्धसत्त्वप्रधानं हि माया। मलिनसत्त्वप्रधानं चाविद्या । एका जगत्कारणं परमेश्वरं सृजति जीवजातं चापरा । एवं च सत्त्वरजस्तमोबलपालितैव माया व्यापारवती भवति नान्यथा । परमाणुवादे प्रधानवादे च प्रधानपरमाणूनां नित्यत्वस्वीकारः । अनित्यत्वे च तेषां नासतो विद्यते भाव इतिदिशा जगदुन्मज्जनं न स्यात् । अद्वैतवादिभिर्ब्रह्मातिरिक्तं किञ्चिदपि नित्यं तत्त्वं नाभिमन्यते । ब्रह्माद्वैतभङ्गभीतिरेव तत्र कारणम् । विशिष्टाद्वैतवादिभिश्च ब्रह्मातिरिक्तं तत्त्वद्वयमधिकमङ्गीक्रियते । तथापि न ते परमाणुवादं प्रधानवादं वा सत्कुर्वते। तेषां मते परमाणुवादोऽवैदिकोऽवैदिकी च प्रधानवादिनां जगत्प्रसवप्रक्रिया । एवं चोपादानतायामेव कलहो न कर्तरि । कर्ता च तार्किकाणामनुमानगम्य इति न सहन्ते वेदान्तिनः । कर्त्रवगतौ वेदा एव गतिरिति तेषां निरागमे वर्त्मन्यनुत्साहभाजां भावः ।

तथा च ब्रह्मैव जगदनवद्यो हेतुरिति पूर्वं गतम्। तत्राशङ्कते, परस्मिन्ब्रह्मणि जगज्जन्मादिहेतुतोपपादकं शब्दप्रमाणपुञ्जमभिसमर्प्य तस्यैव जगज्जन्मादिहेतुत्वमाहारि भगवता कथं न तत्कस्मिंश्चिज्जीवे वा जडे वान्यत्र कुत्रचिद्वा व्यवह्रियत इत्याह—

## ईक्षतेर्नाशब्दम् ॥१।१।५॥

न शब्दः शब्दप्रमाणं यस्मिंस्तदशब्दम्। यस्मिंश्चेतनेचेतने वा नास्ति शब्दप्रमाणभाप्तपरम्पराप्राप्तं तज्जगतः कारणं न भवितुमर्हति। शब्दप्रमाणाभाव इत्येको हेतुः। अपरस्त्वीक्षतेरिति। यद्यपीक्षधातोर्धातुनिर्देश एवायं श्तिप् तथापि न केवलमत्रेक्षधातुस्वरूपग्रहणमर्थग्रहणमपि। ईक्षधातोर्योऽर्थस्तदर्थवाचिनां सर्वेषां धातूनां ग्रहणमित्यर्थः। सामर्थ्यात्। ईक्षणं च दर्शनं विचारो वा। तथा च यः खलु जगद्विधाता शास्त्रसिद्धस्तेन ज्ञानालङ्कारोपकरणेन भाव्यम्। शास्त्रेषु तस्य ज्ञानत्वस्य ज्ञानवत्त्वस्य च प्रतिपादनात्। ज्ञानवत्त्वं यद्यपि जीवेपि तथापि श्रुतीनां वेदवचनरूपाणां तत्राबाधितान्वयो नास्तीति समन्वये समचर्चि। किं च ज्ञत्वं हि केवलं तत्र। न केवलेन सामान्यज्ञानेन महतीयं विसृष्टिर्वैविध्यं वैचित्र्यं चादधती प्राप्नुयादुन्मेषम्। सर्वज्ञत्वं सर्वशक्तित्वं च तत्रापेक्ष्येते। ते तु केवले ब्रह्मण्येव स्तः। अवशिष्टे चाचेतने ज्ञानवत्त्वस्यैवाभावात्कुतः सर्वज्ञत्वसर्वशक्तित्वविचारो घटतां नाम? ईक्षणप्रतिपादयित्र्यः श्रुतयश्चेमाः [1]"सं यज्जनान्क्रतुभिः

(१) यद्य इन्द्रः परमैश्वर्यसम्पन्नः परमात्मा जनान्सर्वान्पदार्थांश्च क्रतुभिः प्रज्ञाभिर्न तु चक्षुषा सामान्येन समीक्षयत् सम्यगीक्षत इत्यर्थः।

शूर ईक्षयत्"(ऋ०१।१३२।६) [१]"ईक्षे रायः क्षयस्य चर्षणीनामुत व्रजमपवर्तासि गोनाम्" (ऋ०४।२०।८) [२]"नमस्ते राजन्वरुणास्तु मन्यवे विश्वं ह्युग्र नि चिकेषि द्रुग्धम्" (अथ०१।१०।२) [३]"बृहन्नेषामधिष्ठातान्तिकादिव पश्यति" (अथ०४।१६।१) [४]"अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति। कृतानि या च कर्त्वा ॥" (ऋ०१।२५।११) [५]"विद्वान्त्स विश्वा भुवनाभि पश्यत्यवाजुष्टान्विध्यति कर्ते अव्रतान्" (ऋ०९।७३।८) [६]"नकीमिन्द्रो निकर्तवे न शक्रः परिशक्तवे। विश्वं शृणोति

(१) हे परमेश्वर त्व चर्षणीनां प्रजानां राये धनस्य ज्ञानरूपस्य शुभेऽशुभे वा कर्मणि निवासस्य प्रसक्तेरित्यर्थः। ईक्ष ईक्षसे। प्रजानां ज्ञानस्य पुण्यापुण्ययोश्च त्वं द्रष्टासीति भावः। किं च गोनां गवामिन्द्रियाणां व्रजस्य समूहस्य निषिद्धेनिष्टे पथि प्रवर्तमानस्यापवर्तासि निरोधकोसीत्यर्थः।

(२) हे उग्र वरुण राजन् दुष्टेषु दण्डप्रदानावसरे दण्डरूपेणैव दयाप्रदर्शने कुशल विश्वं द्रुग्धं त्याज्यं पापाचारं पापिगणं च नि चिकेषि नितरां जानासि। ते मन्यवे नम इत्यर्थः।

(३) एषां जीवानां पदार्थानां च बृहन्महानधिष्ठाताध्यक्षः परमात्मान्तिकादिव समीपस्थादिव सर्वांस्तांस्तान्पदार्थान् पश्यतीत्यर्थः।

(४) अत इमानि विश्वानि सर्वाण्यद्भुतान्याश्चर्यकराणि जगन्ति कृतानि जातानि या च यानि च कर्त्वा कर्तव्यानि जनिष्यमाणानि तानि सर्वाणि चिकित्वान्प्रज्ञावान्प्रज्ञास्वरूपोभि पश्यति सर्वथा पश्यतीत्यर्थः।

(५) विद्वान्सर्वं जानानः स विश्वा विश्वानि सर्वाणि भुवना भुवनान्यभि पश्यति। किं च कर्ते सत्कर्मण्यव्रतान्न व्रतं येषां तानजुष्टान्सदाचारादिभिरसेवितान्दुरात्मनोव विध्यति दण्डयति चेत्यर्थः।

(६) इन्द्रः परमप्रकाशः स परमात्मा निकर्तवे निकर्तुं तिरस्कर्तुं नकीं न केनापि शक्यः। शक्रः परमसमर्थः स परिशक्तवे परिभावयितुं च न शक्यः। परमविलक्षणशक्तिः स विश्वं कृत्स्नं शृणोति पश्यति चेत्यर्थः।

पश्यति ॥" (ऋ०८।७८।५) [1]"यो विश्वाभि वि पश्यति भुवना सं च पश्यति । स नः पूषाविता भुवत् ॥" (ऋ०३।६२।९) [2]"यस्मिन्वेदा निहिता विश्वरूपास्तेनौदनेनाति तराणि मृत्युम् ।" (अथ०४।३५।६) इत्याद्याः। सर्वत्रैव ब्रह्मणो ज्ञानस्वरूपतेक्षणकर्तृता च प्रतिपादिता। यस्मिन्वेदा निहिता इति वचनेनाज्ञानलेशोपि ब्रह्मणो वार्यते। एवं सन्ति बहवो वेदशब्दाः प्रमाणमत्र ततो विचारसंचाराच्छास्त्रयोनित्वं जगज्जन्मादिहेतुत्वं च ब्रह्मण एव नाशब्दस्य जडादेरिति सिध्यति ॥१।१।५॥

नन्वीक्षणव्यवहारेणैव चेद्ब्रह्मणः सर्वज्ञत्वमत एव चाशेषजगदुन्मेषहेतुत्वमुन्मेषितं तत्तुच्छम् । गौणप्रयोगादपि तत्सिध्यति। रथो गच्छति ग्रावा रोदितीतिप्रयोगयोरचेतनस्यापि रथस्य गतिर्ग्राव्णश्चाक्रन्दनमभिटङ्कितं इत्याशङ्क्याह—

## गौणश्चेन्नात्मशब्दात् ॥१।१।६॥

गौणो गुणपराहत एवेक्षणादिप्रयोग इति चेन्न । कुतः ? आत्मशब्दात्=आत्मवाचकशब्दादित्यर्थः । किमित्यात्मवाचकशब्दादिति ? शृणु । रथो गच्छतीतिवच्चेतनेचेतने च जीवजाते

---

(१) यः परमात्मा विश्वा विश्वानि भुवना भुवनानि अभि अभितो वि पश्यति सं पश्यति सम्यग्प्रक्षति च । स पूषा पोषणकर्ता नोस्माकमविता रक्षको भुवद्भवति ।

(२) यस्मिन्विश्वरूपा निखिला वेदा निहितास्तदुपदेश्यत्वेन तज्ज्ञानरूपाः सन्तः स्थितास्तेनौदनेन कृपया हृदयद्रावकेणोपास्येन परमात्मनेत्यर्थः । मृत्युमति तराणि परमात्मानं द्वारीकृत्य मृत्युमुखाद्विमुञ्चेयमित्यर्थः ।

प्रधानादौ च गौणमीक्षितृत्वं तदानीमेवोपकल्प्यं, स्याद्यदि सम्भावना। सैव च नास्ति। ईक्षणे सर्वत्रैवात्मशब्दः श्रूयते। तथा हि "सं यज्जनान्क्रतुभिरि" (ऋ०१।१३२।५) तीन्द्रदेवताको मन्त्रः। "ईक्षे रायः क्षयस्ये" (ऋ०४।२०।८) ति च सोमदेवताकः। इन्द्रसोमशब्दावुभावेव ब्रह्मवाचकावत्र। तस्मिन्नेव मन्त्रदृष्टार्थसमन्वयात्। न हि प्रज्ञाविहीनेनाचेतनेनाल्पप्रज्ञेन वा चेतनेन सर्वमीक्षितुं शक्यते। आथर्वणा अप्युपरिनिर्दिष्टा मन्त्रा आत्मानमेवाभिप्रयन्ति। [1]"सूर्य आत्मा जगतस्तस्थुषश्च" (यजु०७।४२) [2]"स रेतोधा वृषभः शाश्वतीनां तस्मिन्नात्मा जगततस्थुषश्च" (ऋ०७।१०१।६) [3]"आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः। प्रत्नं नि पाति काव्यम्" (ऋ०९।६।८) इत्यादिभिर्मन्त्रैः संचारितश्चेतनः सर्वज्ञ आत्मा तत्र। अतो न शक्यते वक्तुं गौणमिदमीक्षणं जडेपि जीवेपि च संभवतीति ॥१।१।६॥

अपरमपि हेतुमाह—

---

(१) सरति सर्वत्रेति सूर्यः सर्वव्यापकः परमात्मा जगतो जङ्गमस्य तस्थुषो जडस्य चात्मेत्यर्थः।

(२) वृषं धर्मं भासयतीति वृषभो धर्मप्रकाशकः शाश्वतीनां परमात्मविषयकरतीनां रेतोधा बलाधायकस्तस्मिन्सः। प्रथमार्थे सप्तमी। जगतस्तस्थुषश्चात्मा।

(३) यज्ञस्यात्मन आत्मात्मभूतः सुतो भक्त्यनुष्ठानकाले स्मृतः सुष्वाणो भक्तकामान्निष्पादयन्रंह्या रंहसा पवते पुनाति सर्वान्। प्रत्नं प्राचीनं काव्यं शब्दं भक्तरक्षणप्रतिज्ञारूपं च नि पाति नितरां रक्षति।

## तन्निष्ठस्य मोक्षोपदेशात् ॥१।१।७॥

तस्मिन्ब्रह्मणि निष्ठा सर्वातिशायिनी रतिर्यस्य तस्य चेतनस्य मोक्षोपदेशादपि स ईक्षणकर्ता न तद्भिन्नश्चेतनाचेतनयोरुभयोरपि कोप्यन्यः। न वा स गौणप्रयोगः। कुत्रोपलभ्यते तन्निष्ठस्य मोक्षोपदेशः? वेदेषु। तथाहि [1]"अकामो धीरो अमृतः स्वयम्भू रसेन तृप्तो न कुतश्चनोनः। तमेव विद्वान्न बिभाय मृत्योरात्मानं धीरमजरं युवानम्॥" (अथ० १०।८।४४) [2]"मा भेम मा श्रमिष्मोग्रस्य सख्ये तव। महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम्" (ऋ० ८।४।७) [3]"तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यते" (शु० य० ३१।१८) [4]"पश्चात्पुर-

(१) योऽकामः कामादिविकाररहितो धीरः सर्वेषां धियां सन्मार्गे प्रेरयितामृतोमरणधर्मा स्वयम्भूः स्वतन्त्रसत्ताको रसेनानन्देन तृप्तः कुतश्चन केनचिदपि नोनो न न्यूनस्तमेव धीरमजरं जरारहितं युवानं नित्यं नवमात्मानं विद्वाञ्ज्ञानो मृत्योर्न बिभाय बिभेतीत्यर्थः।

(२) अग्रस्य सर्वश्रेष्ठस्य तव सख्ये समानधर्मतायां विद्यमाना वयं मा भेम मा भैष्म मा श्रमिष्म मा श्रान्ति भक्ष्महि। वृष्णः सर्वेषां कामानां पूरयितुस्ते तव महत्प्रभूतं कृतं कर्माभिचक्ष्यमभितो वर्णनीयम्। तुर्वशं कामवन्तं मनुष्यम्। तुर्वश इति मनुष्यनाम (निघ० २।३।१५)। यदुं संयमिनं सन्मार्गस्थितं मनुष्यम्। यदुरिति मनुष्यनाम (२।३।१८)। पश्येम त्वदनुग्रहान्निर्भीकानश्रान्तांश्च सन्मार्गे स्थितान्मनुष्यान्पश्येम पश्यामः।

(३) तं परमात्मानमेव विदित्वा ज्ञात्वा तद्भावमेत्येत्यर्थः। मृत्युं जननमरणपाशमत्येति सर्वथातीतो भवति। अयनाय परमपदप्राप्तयेऽन्यः पन्था न विद्यते।

(४) हे राजन्प्रकाशस्वरूप परमात्मन् कविः क्रान्तदर्शी त्वं काव्येनाद्भुतसामर्थ्येन पश्चात्पश्चिमायां दिशि पुरस्तात्पूर्वस्यां दिश्यधराद्दक्षिणस्यां दिश्युदक्ता-

स्तादधरादुदक्तात्कविः काव्येन परि पाहि राजन् । सखे सखायमजरो जरिम्णेऽग्ने मर्तां अमर्त्यस्त्वं नः ॥" (ऋ०१०। ८७।२१) "यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने । प्र तं नय प्रतरं वस्यो अच्छाभि सुम्नं देवभक्तं यविष्ठ ॥" (ऋ०१०।४५।९) इत्याद्या मन्त्राः सर्वशक्तिनि महेश्वरे ब्रह्मणि निरतानां विरतानां च कन्दर्पसर्पप्रतिसर्पणाद्युक्तानां सर्वसामर्थ्यैभ्यर्थ्यै च समर्थानामपि समभ्यर्थनीयानां देवानां वियुक्तानां च कुलपुत्रकलत्रतन्त्रपारतन्त्र्यान्मोक्षमुपदिशन्ति । न ह्यचेतनस्य ब्रह्मेतरचेतनस्य वोपासनेन मायामतीत्य मुक्तिमूर्तिस्फूर्तिसंभवः ॥१।१।७॥

अपरश्चायं हेतुः–

## हेयत्वावचनाच्च ॥१।१।८॥

हातुं योग्यं हेयम् । तस्य भावो हेयत्वम् । तस्यावचनमनुपदेशस्तस्माच्च । चः समुच्चये । अचेतनैः संचितेषु चाकचिक्यो-

---

दुत्तरस्यां दिशि च परि पाहि परितो रक्षास्मान् । हे सखे समानख्यातिमन्नजरस्त्वं सखायं मामजरिम्णेजराय मोक्षायेत्यर्थः । नय । अमर्त्योमरणधर्माग्ने प्रकाशस्वरूप त्वं नोस्मान्मर्तान्मरणधर्मणोजरिम्णे नयेत्यर्थः ।

(१) हे भद्रशोचे भद्रा कल्याणकारिणी शोचिर्दीप्तिर्यस्य स तत्सम्बुद्धौ भद्रशोचे, अग्ने प्रकाशस्वरूप परमात्मन्, देव अद्य ते तव य उपासकोऽपूपमविशरणस्वभावं घृतवन्तं प्रकाशवन्तं त्वां कृणवत्करोति साक्षात्करोतीतिभावः । तं प्रतरं प्रकृष्टतरमुपासकमच्छ प्रति वस्य आच्छादनं रक्षणं प्र नयात्यर्थं प्रापय । तं सर्वथा रक्षेति भावः । किं च हे यविष्ठ जरामरादिवर्जित परमेश्वर तं देवभक्तं तवोपासकं सुम्नं सुखं प्रति अभि नय सर्वथा प्रापयेत्यर्थः ।

पचितेष्वचिररक्षणीयेषु रमणीरमणादिषु रममाणानां न हि रमणीयतमेकलितावतमसे महामहसि श्रुतिविश्रुतयशसि सर्वात्मनि परमात्मनि रतेरुद्गतिरिति हेयमेव जडजातं प्रतिपादितम्। तथाहि "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति॥"

---

(१) द्वा द्वौ सुपर्णा सुपर्णौ सुष्ठुतया जगतः पालयितारौ सयुजा सयुजौ सह युज्येते इति सयुजौ सहवासिनौ समानयोगौ वा सखाया सखायौ समानख्यातिमन्तौ जीवपरमात्मानौ समानमेकं वृक्षं वृश्च्यते छिद्यते नश्यत इति वृक्षस्तं देहं जगद्वा परि षस्वजाते आलिङ्गत आश्रयतः। एकस्मिन्नेव जगत्युभयोर्निवासः। तयोर्जीवपरमात्मनोर्मध्येऽन्यो जीवः पिप्पलं पिपर्त्तीति पिप्पलं कर्मफलं स्वादु आपातरमणीयमत्ति भुङ्क्तेऽनुभवति। अन्यः परमात्मा पिप्पलमनश्नन्नभुञ्जानोऽभि सर्वथा चाकशीति दीप्यते प्रकाशते। विवदन्ते विद्वांसोऽस्मिन्मन्त्रे जीवब्रह्मणोर्भेदः प्रतिपादितोऽभेदो वेति। शब्दतस्तु भेद एव स्पष्टः। सुपर्णौ सयुजौ सखायौ इति द्विवचनं भेदनिदर्शकमेव। वृक्षं परिषस्वजाते इति वृक्षाश्रयणमपि समानमुभयोः। तयोरन्य इत्युभे एव पदे भेदद्योतके एव। एकमपि पदं नोपलभ्यतेऽत्र येनोभयोरभेदः प्रतिपाद्यः स्यात्। न चौपाधिकभेदो भावनीयः। वैदिकब्रह्मण उपाधेरदर्शनात्। न च समानख्यातिमत्त्वेनाभेदो द्वयोः स्पष्टव्यः। आत्मत्वाजरत्वामरत्वादिसमानख्यानैस्समानख्यातिमत्त्वस्य चारितार्थ्यात्। किंचाभेदवादिमते नौपाधिकोऽप्यात्मा कर्मफलं भुङ्क्ते। चैतन्यसन्निधानेनान्तःकरणमेव कर्तृ भोक्तृ चेति तन्मतम्। न हि वेदेषूपाधिर्नाम कश्चन परमात्मनो रोगविशेष उपवर्णितः। इन्द्रो मायाभिः पुरुरूप इत्यत्र मायाशब्दार्थः शक्तिर्ज्ञानं वा। "महीं मायां वरुणस्य प्र वोचम्" (ऋ० ५।८५।५) इत्यत्रापि मायां प्रज्ञामिति सायणाचार्याः। "मही मित्रस्य वरुणस्य माया" (ऋ० ३।६१।७) इत्यत्रापि माया प्रज्ञारूपेति सायणाचार्याः। निघण्टावपि मायाशब्दः प्रज्ञानामसु पठितः (निघ० ३।९।९)। नास्ति कुत्रापि वेदे ब्रह्मशक्त्यावृतिसम्पादिका काचन माया। कथं माया मायामतीतं परमात्मानं

(ऋ०१।१६४।२०) इत्यस्मिन्मन्त्रे प्रकृतिपादपपिप्पलमनश्नत एव श्रितश्रेयस्कत्वस्य प्रतिपादनेन प्रकृतिपुष्पपरागरागविभाग एव शरणमशरणानां प्रकृत्यापातरमणीयाङ्गाङ्गनाक्रोडक्रीडापरायणानां जीवानामित्यभिहितम्। [1]"यस्मिन्वृक्षे मध्वदः सुपर्णा

व्याकुलीकर्तुं प्रभवेत्? एवं च न प्रस्तुतेन मन्त्रेण जीवब्रह्माभेदः सिद्धिसोपानमारोढुं शक्नोति।

नैतन्मन्तव्यं वयं भेदवादिन इति। न हि कोपि कमपि स्वस्मादुत्तमं विधाय स्वगौरवमातनुते। साम्यवादोभेदवादो वा ज्यायान्। भक्ता अपि चरमदशायां परमात्मानं स्वाभेदेनैव पश्यन्ति। अहमेव त्वं त्वमेवाहमिति धीः स्फुरति मध्यमभक्तानाम्। उत्तमानां तु भक्तिरसैकास्वादजुषां ध्येये परस्मिन्ब्रह्मणि स्वं विलापयतां न स्फुरतो युष्मदस्मदी। आत्मानं विस्मृत्य परमात्मनि नियतस्य न जागर्ति भेदः। परमात्मसाक्षात्कारं कुर्वतस्तदानीं परमानन्दसम्पन्नस्याभेदोपि न प्रतीयत इत्यन्यदेतत्। उक्तं च "त्वयि लीनो न जानामि कोहं को वा भवानिति। परमानन्दसन्दोहे निमग्ने युष्मदस्मदी॥" इत्यस्माभिरेव।

(१) यस्मिन्वृक्षे सर्वापच्छेदनसमर्थे परमात्मनि मध्वदो मधु ज्ञानम्। मन ज्ञाने। उप्रत्ययो धोन्तादेशश्च। तदन्त्यनुभवन्तीति मध्वदो ज्ञानिन इत्यर्थः। सुपर्णा ज्ञानेन सुपालिताः सुरक्षिता निविशन्ते प्रविशन्ति निवसन्तीति यावत्। विश्वे अधि षष्ठ्यर्थे सप्तमी। विश्वस्योपरि सुवते स्थितिमधिगच्छन्ति। तस्येत्तस्यैव जीवसमूहस्यैवाग्रे स्वरूपज्ञानानन्तरं स्वादु सर्वश्रेष्ठं पिप्पलं मुहुर्मुहुर्जनिमृतिसंसृतितोत्यथ पृथक्कृतिरूपपालनसमर्थं ज्ञानमितिभावः, आहुर्विद्वांसः। अयं भावः। ज्ञानं तु ब्रह्मणः स्वरूपतया सर्वदा सर्वत्र तिष्ठत्येव। परन्तु ये ज्ञानानुभविनः सन्ति त एव मुच्यन्ते। ये सांसारिकाण्यसाराणि वस्तूनि परित्यज्य सम्यग्ज्ञानानुभूतावभिरतास्तेषामेव ज्ञानमिति विदुषां मतम्। यश्च संसारप्रवणो जीवः पितरं पालकं सर्वदुःखेभ्योभिरक्षितृ तज्ज्ञानं न वेद नानुभवति स न उत् नशत् स सर्वापद्विमोकं नैव प्राप्नोतीत्यर्थः।

निविशन्ते सुवते चाधि विश्वे। तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोनशद्यः पितरं न वेद॥" (ऋ० १।१६४।२२) इत्यत्र च पितृभूतं परमात्मानमजानतोभिभवनीयभवविभवभव्यतामुपलालयतश्च नात्यन्तविपदवसानमिति साग्रहमभ्यधायि। एवं च जडस्येव ब्रह्मणो न हेयत्वं कुत्रापि श्रूयते प्रत्युत तस्योपासनीयतैव सर्वत्र प्रत्यपादि। तथा हि [1]"तमेव विद्वान्न बिभाय मृत्योः" (अथ० १०।८।४४) [2]"तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेयनाय" (शु०य० ३१।१८) [3]"यस्तन्न वेद किमृचा करिष्यति" (ऋ० १।१६४।३९) [4]"त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवेदिवे। यस्तातृषाण उभयाय

---

(१) तमेव परमात्मानमेव विद्वाञ्जानानो मृत्योः संसारान्न बिभाय बिभेति। परमात्मस्वरूपापत्तिरेव परमात्मवेदनम्।

(२) तमेव परमात्मानमेव विदित्वा ज्ञात्वा जनो मृत्युमत्येति। अन्यस्तदतिरिक्तः पन्था अयनाय संसाराद्गमनाय संसाराद्विमुक्तय इत्यर्थः, न विद्यते। परमात्मास्तीत्येव ज्ञानं न मृत्यत्ययहेतुः। अतस्तद्भावापत्तिरेव तज्ज्ञानम्।

(३) यस्तद्ब्रह्म न वेद स ऋचा ऋगध्ययनमात्रेण किं करिष्यति किं फलं लप्स्यते? तज्ज्ञानमन्तरेण वेदाध्ययनं निरर्थकमितिभावः।

(४) हे अग्ने परमेश्वर, त्वं तं स्वोपासकं कामक्रोधादिनिखिलबन्धविरहितं मर्तं दिवेदिवे प्रतिदिनं सर्वदा श्रवसे श्रेयसे कल्याणायोत्तमे सर्वस्पृहणीयेमृतत्वेमृतभावे ब्रह्मभावे दधासि धारयसि स्थापयसि। य उभयाय जन्मने मरणाय च संसारलाभायैवेत्यर्थः, तातृषाणः सतृष्णो भवति त्वां चोपास्ते त्वदाज्ञामनुसृत्य संसारव्यवहारं निर्वाहयति तस्मै सूरये संसारिणे मयः सुखं प्रयः प्रियमन्नादिकं च आ कृणोषि सर्वथा सम्पादयसि। प्रय इत्यन्ननाम। तत्रैव श्रव इतिपाठ इति केचित् (निघ० २।७।४)।

जन्मने मयः कृणोषि प्रय आ च सूरये ॥" (ऋ०१।३१।७) एवं च हेयत्वावचनाच्च न किञ्चिज्जडमजडं वा ब्रह्मपदं स्पृशति। यदि जडमेव किञ्चिद्ब्रह्म स्यात्तस्याहेयत्वं न स्यात् ॥१।१।८॥

अपरश्चायं हेतुः—

## प्रतिज्ञाविरोधात् ॥१।१।९॥

श्रुत्या प्रतिश्रुतं [1]"यस्य छायामृतं यस्य मृत्युः" (अथ० ४।२।२) [2]"तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम् ॥" (शु०य०२५।१८) इत्यादि। अत्र परमात्मन आश्रयोऽमृतत्वेनोपवर्णितस्तदनाश्रयश्च मृत्युत्वेन। "तमेव विदित्वाति मृत्युमेति" (शु०य०३१।१८) इत्यादिना च तद्वेदनेनैव जननमरणादिनिवृत्तिरूपस्य मोक्षस्य प्रतिज्ञानात्स्यादेव प्रतिज्ञाविरोधो यदि जडमेवोपास्यत्वेन जगत्कर्तृत्वेन चानुगृहीतं भवेत्। प्रतिज्ञाविरोधश्च प्रतिज्ञातुरप्रामाणिकतामुपस्थापयेत्। न च तमेव विदित्वेत्यत्रैवकारोऽप्यर्थ स्तेन तस्यापि जडस्यापि चोपासनमायातं ततश्च न प्रतिज्ञाभङ्ग इति वाच्यम्। कुत्राप्यन्यत्र जडोपासनाया अश्रवणान्नाप्यर्थक एवकारः। अन्ययोगव्यवच्छेदार्थको हि सः। ततः परमात्मातिरिक्तस्यान्यस्योपासना-

---

(१) यस्य परमात्मनश्छाया समाश्रयणममृतममृतकारणं भवति यस्य चानाश्रयणं मृत्युकारणं भवति।

(२) ईशानमैश्वर्यस्वामिनं जगतश्चेतनजातस्य तस्थुषो जडजातस्य च पतिं रक्षकं धियञ्जिन्वं सङ्कल्पमात्रेण प्रीणयितारं तं परमात्मानमवसेवितुं रक्षितुं तर्पयितुं वयं हूमहे आह्वयामः।

योगं व्यवच्छिनत्ति सः ॥१।१।९॥

अपरश्चायं हेतुः—

स्वाप्ययात् ॥१।१।१०॥

अप्ययो लयः। स्वस्य कारणं स्वकारणम्। स्वकारणेप्ययः स्वाप्ययः। मध्यमपदलोपी समासः। "तस्मिन् हि तदेकनीडं भवती"ति श्रुतिः ( )। एकनीडभवनमेवाप्ययः। कार्यस्याप्ययः स्वोपादनकारण एव भवतीति नियमः। यथा प्रलयकाले सर्वं जगदेकनीडं भवति तथैव सुषुप्तिकाले जीवोप्येकनीडो भवति। ब्रह्मणि लयमाप्नोतीत्यर्थः। एकनीडमित्यस्य समानाधिकरणमित्यर्थः। यदि कार्यमात्रस्य किञ्चिज्जडमेव कारणं तर्हि चेतनस्यापि जीवस्य स्वकारणे जडे स्यादेवाप्ययः। स च लोकशास्त्रविरुद्धः। यद्यपि जीवस्य नित्यत्वेनाकार्यत्वान्न कारणान्वेषणेत्यभियोक्तव्यं स्यात्तथापि स्यान्नामायमेकः पक्षः। पक्षान्तरे तु तस्याप्यौपाधिकत्वादनित्यत्वम्। ब्रह्मातिरिक्तं सर्वमनित्यं हि तत्सिद्धान्तः। चैतन्याज्जायमानं जगत्त श्रुतिप्रतिपादितम्। परन्तु जडादवतरत्तन्न कुत्रापि श्रौतवाक्येन निःश्वसितमपि। न च [1]"बृहन्तो नाम ते देवा येऽसतः परिजज्ञिरे" (अथ० १०।७।२५) [2]"देवानां पूर्व्ये युगेऽसतः सदजायत" [3]"देवानां युगे प्रथमेसतः सदजायत" (ऋ० १०।७२।२–३) इत्येतैरसत एव जगदुत्पादः प्रतिपाद्यत इति वाच्यम्।

---

१,२,३–निगदव्याख्याताः।

एतस्य दत्तोत्तरत्वात् । अथवा सत इत्यस्य न सतोसत इति नार्थः । नात्र नञ्समासः । श्रौतो ह्यल्लोपाभावः । तेन सत इत्येवार्थः । ज्ञानपूर्वका हि सृष्टिर्दृश्यते । अज्ञानं हि जडम् । तस्मान्न जडाच्चेतनाचेतनयोरवतारः । तथा सति स्वाप्ययो विरुध्येत ।

अत्रेदं विचारणीयम् । अयं स्वाप्ययप्रसङ्गो विशिष्टाद्वैतवादिनामनुकूलो न वेति । नैवानुकूलः । तत्र हेतुः । अद्वैतवादिनां नये ब्रह्मातिरिक्तं सर्वं कल्पितमनित्यं च । जीवभावोपि कल्पित एव तत एव जन्यः । ईश्वरभावोपि जन्य एव । तस्याप्यौपाधिकत्वात् । यज्जन्यं तत्कारणानुसारि । जन्यो हि जीवस्तेषां मते । तत एव सुषुप्तिकाले स स्वस्य कारणमात्मानमपीतो भवतीति युक्तम् । विशिष्टाद्वैतवादिनां मते तु ब्रह्मेश्वरश्चानर्थन्तारतामवगाहेते । यदेव ब्रह्म स एवेश्वरः । य एवेश्वरस्तदेव ब्रह्म । जीवोपि नौपाधिकः । यथेश्वरो नित्यो जीवोपि तथैव । [1]"क ईं व्यक्ता नरः सनीडाः" (ऋ०७।५६।१) इत्यत्र जीवनित्यत्वप्रतिपादनेन नासौ कस्यापि कार्यं जीवः । अतस्तस्याप्ययाय

---

१ क ईं व्यक्ता नरः सनीडा रुद्रस्य मर्या अधा स्वश्वाः । नकिर्ह्येषां जनूंषि वेद ते अङ्ग विद्रे मिथो जनित्रम् ॥ इतिसम्पूर्णो मन्त्रः । अस्यार्थः— रुद्रस्य परमात्मनः सनीडाः समानावकाशा नरः सन्मार्गगमनशीला नेतारो वान्यान्सन्मार्गेषु व्यक्ताः कान्तिमन्तः अध अथ स्वश्वाः सुष्ठु परमात्मनि व्याप्ता रता ईम् इमे मर्या मनुष्या मनुष्यदेहवन्तो जीवाः के ? एषां जीवानां जनूंषि जन्मानि नकिः कोपि न वेद नित्यत्वाद्धि तेषाम् । अङ्ग ते मिथः परस्परं जनित्रं विद्रे विदन्ति । इयमस्माकं जननी जनकश्चायमितिरीत्या मिथो विदन्ति वस्तुतो न कोपि तेषां जनिं वेत्ति ।

कारणान्वेषणं विफलप्रयासम् । तथापि स्वाप्ययस्तु विशिष्टाद्वैतवादिनामपि जीवस्य भवत्येव । कथं हि तत्सम्भवः? इत्थम् । नायं नियमो जन्यमेव कार्यशब्दाभिधेयमिति । ईश्वरेण स्वेच्छया नियाम्यमुपयोज्यं चापि कार्यकोटिमाटीकते । अथवा जगतः स्थूलदशायां स्थूलेन शरीरेण सम्बद्ध्यमानोजन्योपि जन्य इव जीवो व्यवह्रियते । सर्व एव जीवगण ईश्वरस्य स्वेच्छया नियाम्य उपयोज्यश्चेति जन्य इव प्रतिभासतेजन्योपि सृष्टिकाल इति वा जीवानां कार्यत्वं सिध्यति । ततश्चेश्वरे कारणत्वमपि संगच्छते ॥१।१।१०॥

अपरश्चायं हेतुः–

## गतिसामान्यात् ॥१।१।११॥

गतेः सामान्यं गतिसामान्यं तस्मात् । अस्यां ब्रह्ममीमांसायां समानयैव गत्या भाव्यम् । केन सह? ब्रह्ममीमांसोन्मुखैरितरैर्मन्त्रैः सह । के ते मन्त्राः? [1]"देवो देवायं गृणते वयोधा विप्रो विप्राय स्तुवते सुमेधाः । अजीजनो हि वरुण स्वधावन्-

(१) गृणते स्तुवते त्वां त्वं वयोधा अन्नदाता गतिप्रदाता कान्तिप्रदाता वासि । स्तुवते विप्राय मेधाविने । विप्र इति मेधाविनाम (निघ०३।१५।१) त्वं सुमेधाः परमज्ञानोसि । हे स्वधावन् स्वयमेव स्वस्य धारणकर्तः वरुण वरणीय देव देवबन्धुं परमात्म(स्व)सम्बन्धिनमथर्वाणमविनाशिनं पितरं स्वमन्यांश्च पातारं जीवजातं त्वमजीजनः कर्मानुगुणं देहेषु समचारयः संचारयसि च । तस्मै त्वया प्रादुर्भाविताय जीवसमूहाय सुप्रशस्तं राधो धनं ज्ञानं वा कृणुहि देहि । त्वं नः सखा उ परमं परमो बन्धुः सम्बन्धी चासि ।

थर्वाणं पितरं देवबन्धुम्। तस्मा उ राधः कृणुहि सुप्रशस्तं सखो नो असि परमं च बन्धुः ॥" (अथ० ५।११।११) [1]"सत्यमहं गभीरः काव्येन सत्यं जातेनास्मि जातवेदाः। न मे दासो नार्यो महित्वा व्रतं मीमाय यदहं धरिष्ये ॥" (अथ०५।११।३) "न त्वदन्यः कवितरो न मेधया धीरतरो वरुण स्वधावन्। त्वं ता विश्वा भुवनानि वेत्थ स चिन्नु त्वज्जनो मायी बिभाय ॥" (अथ० ५।११।४) इत्यादयः। एतेषु मन्त्रेषु ब्रह्मस्वरूपनिरूपणपरायणेषु सर्वज्ञचेतन एव जगत्कर्तेत्यवधारितमिति न जडं कर्तृ। या गतिर्वेदेषु सैव गतिर्मयापीह ब्रह्ममीमांसायामाश्रयणीया। यदि श्रुतिवचश्चयविरुद्धं जडं किञ्चिज्जगत्कर्तृ स्वीक्रियेत स्यादेव परमप्रामाण्यमुपगताया भगवत्याः श्रुतेर्व्याकोपः ॥ १।१।११॥

अधिकरणोपसंहाररूपोपरश्चायं हेतुः–

## श्रुतत्वाच्च ॥१।१।१२॥

चेतन एव कर्ता श्रुतिश्रुतो नाचेतनः। का सा श्रुतिः?

---

(१) वरणीयो देवः परमात्मोपदिशति–सत्यमहं गभीरोनवगाह्योस्मि। जातेनोत्पन्नेनोत्पादितेन काव्येन वेदेन सत्यमहं जातवेदा अस्मि जातं वेदो ज्ञानं यस्य तथाभूतोस्मि। यद्व्रतं सङ्कल्पमहं धरिष्ये धारयामि तं मे मम सङ्कल्पं न दासोनार्यो न वार्यो महित्वा महिम्ना बलेनेति यावत् मीमाय हिनस्ति।

(२) हे स्वधावन् स्वत एव स्वस्य धारक वरुण त्वदन्यः कश्चनोत्तमः कविर्न मेधया नवनवोन्मेषशालिन्या बुद्धयापि त्वत्तः कश्चन धीरतरो नास्ति। तानि प्रसिद्धानि विश्वान्यखिलानि भुवनानि त्वं वेत्थ वेत्सि। त्वं सर्वं जानास्यत एव स मायी कपटप्रबन्धप्रणेता जनस्त्वत् बिभाय चिन्नु बिभेत्येव।

उपरिनिर्दिष्टा बह्वृचः । अन्याश्चेमाः "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥" (ऋ० १०।१९०।३) [1]"अस्तभ्नाद्द्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः । आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि ॥" (ऋ०८।४२।१) [2]"स नो बन्धुर्जनिता स विधाता" (शु०य० ३२।१०) [3]"तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः॥" (ऋ० १।३१।१) इत्याद्याः । तस्मान्न ह्यशब्दं शब्दप्रमाणरहितमचेतनं जगत्कर्तृ भवितुमर्हतीति वैयासिकः पन्थाः ॥१।१।१२॥ इतीक्षत्यधिकरणम् ॥५॥

(अथानन्दमयाधिकरणम् ॥६॥)

पुनः कीदृशं तज्जिज्ञास्यं ब्रह्मेत्याह—

## आनन्दमयोऽभ्यासात् ॥१।१।१३॥

ब्रह्मापरपर्यायः परमात्मा । तमेवोद्दिश्यात्र पुंस्त्वम् । तद् ब्रह्मानन्दमयम् । कुतो ज्ञायते ? अभ्यासात् । अभ्यसनमभ्यासः ।

---

(१) विश्ववेदाः सर्वज्ञोऽसुरः परमात्मा । असून्प्राणान्बलानि राति ददातीत्यसुरः । द्यां द्युलोकमस्तभ्नात्स्थिरां कृतवान् । पृथिव्या वरिमाणं पृथुत्वं विस्तारममिमीत निर्मितवान् । स सम्राट् परमशोभासम्पन्नो विश्वा विश्वानि सर्वाणि भुवनानि पृथिव्यादीन्यासीदत्प्रविश्याध्यतिष्ठत् । तानि प्रसिद्धानि सर्वाण्येतानि वा दृश्यमानानि व्रतानि कर्माणि वरुणस्येद् वरुणस्यैव । व्रतमिति कर्मनाम (निघ० २।१।७) ।

(२) निगदव्याख्यातः ।

(३) तव परमात्मनो व्रते संसारसर्जनरूपकर्मप्रवाहे विद्मनापसो विद्मनानि परिज्ञातान्यपांसि कर्माणि येषां तथाभूता मरुतो रोचमाना भ्राजदृष्टयस्तत्त्वदर्शिनः कवयः क्रान्तदर्शिनोजायन्त ।

कस्या अपि कृतेः पौनःपुन्येन करणमिति यावत् । पुनः पुनरुच्चारणमप्यभ्यासो भवति । अभ्यासेन हि तस्यानन्दमयतावगम्यते । क्वाभ्यासः ? वेदेषु । तथा हि, [1]"वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः । स्याम ते सुमतावपि ॥" (ऋ० ८।४४।२४) [2]"वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः । इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥ (ऋ० १।९८।१) इत्यनयोर्ऋचोः कमस्यग्न इति कं भुवनानामिति चोपदिष्टम् । कं सुखम् । कमसि सुखस्वरूपमसि । भुवनानां राजा हि कम् सुखस्वरूपमानन्दमयमित्यर्थः । "अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ॥" (ऋ० ७।५५।१) सर्वव्याधिविनाशक मनोमन्दिराधिराज परमेश्वर विश्वा रूपाणि त्वमाविशन् सर्वदा प्रविष्टोस्ति । सुशेवोत्यर्थसुखरूपस्त्वं नोस्माकं सखा एधि भवेतिप्रार्थनेनानन्दमयता तस्य ख्यापिता । [3]"स शेवृधमधि धा द्युम्नमस्मे" (ऋ० १।५४।११)

---

(१) हे अग्ने परमात्मन्, त्वं वसुः सर्वेषां वासयिता वसुपतिः सर्व-स्व-स्वामी चासि । एवं कमानन्द आनन्दस्वरूपो विभावसुः प्रकाशनिधिश्चासि । वयं ते तव सुमतौ त्वया प्रवर्तितायामाज्ञायां स्याम वर्तेमहि ।

(२) वैश्वानरस्य सर्वजनशुभाकाङ्क्षिणः परमात्मनः सुमतौ स्याम । राजा हि स भुवनानां सर्वलोकानाम् । किं च कं सुखस्वरूप आनन्दस्वरूपोभिश्रीरभित आश्रयणीयश्चास्ति । इतः परमात्मनो वैश्वानराज्जातो जातमिदं विश्वं वैश्वानर एव विचष्टे विविधं पश्यति सूर्येण सूर्यसहयोगेन च यतते सर्वान् सुखयितुं प्रयतते ।

(३) शेवृधं सुखस्वरूपमानन्दमयं स तत्त्वमस्मे अस्मासु द्युम्नं प्रकाशं ब्रह्मानुभवजन्यं तेजोधि धा अधिधेहि अधिकं निधेहीत्यर्थः ।

"तं त्वमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवेदिवे ।
यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये ॥"
(ऋ० १।३१।७) इत्यत्र मय आनन्दं कृणोषि तनोषीत्युक्तम् । आनन्दमय एवानन्दं वितनितुं समर्थः । [1]"जने न शेव आहूर्यः सन्" (ऋ०१।६९।२) इत्यत्र त्वं लोके शेव आनन्दमयोसीत्युक्तम् । [2]"शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥"
(ऋ० ३।३०।२२) शुनमानन्दमयमिन्द्रं परमात्मानं हुवेमेत्युक्त्या तस्य परस्य ब्रह्मण आनन्दमयता निरामयैवात्रतिष्ठते॥१।१।१३॥

ब्रह्मण आनन्दमयतां दूषयतः समाधानमाह—

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१।१।१४॥

ननु कमिति सुशेव इति शेवृधमिति शेव इति शुनमिति च वैदिकाः शब्दा आनन्दस्वरूपतां तस्याभिदधते न त्वानन्दमयताम् । भवांस्त्वानन्दमय इत्यभ्यधात् । विकारार्थको हि मयट् प्रत्ययः । यत्रानन्दमयं ब्रह्मावश्यं तस्मिन्विकारः पदमर्पयेत् । गुडमया अपूपा ओदनमयं च पायसमितिवत् , इति ब्रूषे चेन्न ।

---

(१) जने जनेषु शेवः सुखकरः सुखस्वरूप आहूर्य आह्वातव्यः । ह्वेञ् आह्वाने । यत् । रेफोपजनश्छान्दसः ।

(२) वाजसातौ उत्तमगतिप्रदातर्यस्मिन्भरे ज्ञानिसमाजे शुनं सुखस्वरूपं मघवानं प्रतिष्ठितं नृतमं नेतृतममस्मत्कृताह्वानं शृण्वन्तमुग्रं तेजस्विनं समत्सु विद्वत्समाजेषु वृत्राणि पापानि घ्नन्तं निवारयन्तं धनानां संजितं सम्यग् जेतारमिन्द्रं परमात्मानं हुवेमाह्वयामः ।

कुतो न? प्राचुर्यात्। प्राचुर्यार्थेपि मयड्भवति। लवणमयः सूप इतिवत्। एवं चानन्दमयं ब्रह्मेत्युक्ते प्रचुरानन्दं हि तदित्युक्तं भवति। तथा च न दोषः। तथापि दोषः। कथम्? प्रचुर आनन्दो यस्मिंस्तदित्युच्यमाने सापेक्षो ह्यानन्दस्तत्र प्रतीयते न त्वानन्दस्वरूपता। सापेक्षे चानन्देभिनन्द्यमाने तस्यानुपादेयत्वं प्रसज्येत। अनवधिकायामस्यां कालपरम्परायां स्यात्कश्चिदपरोपि तदपेक्षयाधिकानन्द इति। सत्यम्। नायं दोषः। असङ्कुचितो हि पन्था वेदविदाम्। ताद्रूप्येत्र मयट्। चिन्मयमितिवत्। तर्हि कथं प्राचुर्यादित्यभिहितम्? ताद्रूप्यार्थक एवात्र प्राचुर्यशब्दः ॥१।२।१४॥

आनन्दमयं हि तद्ब्रह्मेत्यत्रापरं हेतुं प्रणयति–

## तद्धेतुव्यपदेशाच्च ॥१।१।१५॥

तस्यानन्दस्य हेतुस्तद्धेतुः। तस्य व्यपदेशस्तद्धेतुव्यपदेशः। तस्मात्। तद्ब्रह्मैवाखिलस्यानन्दस्य हेतुरिति व्यपदेशो व्यवहारोपि दृश्यते। चकारोप्यर्थः। क्व तथा व्यपदेशः? वेदे। तथा हि, "आनन्दानुग्रो नन्दांश्च कस्माद्वहति पूरुषः।" (अथ० १०।२।९) इत्यनेन ज्ञायते ब्रह्मैव सर्वेषामानन्दानां प्रापयितृ। "स शेवृधमधि धा" (ऋ० १।५४।११) "मयः कृणोषि" (ऋ० १।३१।७) इत्यादिभिरपि ब्रह्मण आनन्दप्रापयितृत्वं निर्विघ्नम्। यदि न स्यात्तदानन्दमयं न स्यात्प्रापयित्रखिलानामानन्दानाम्। अत्रेदमवधेयम्। लौकिकानन्दस्तस्यैवानन्दस्वरूपस्य ब्रह्मणः कश्चिदेवांशः। यदा यदा यो यश्चानन्दोत्रानाद्या मायया मुह्य-

मानेन स्वयमुत्पादिते निरानन्दानवधिकमहोदधौ निमज्जतास्विद्यमानेन जीवेनानुभूयते सर्वो ब्रह्मांश एव सः। ननु निरंशस्य ब्रह्मस्वरूपभूतानन्दस्य कुतः संभवोंशस्येति चेत्पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीतिवत्समाधेयम्। लौकिकानन्दस्यैव ब्रह्महेतुर्न तु स्वरूपभूतानन्दस्यापि। नित्यत्वात्तस्य। एतद्बोधनायैवानन्दानितिबहुत्वनिर्देशः ॥१।२।१५॥

अपरं हेतुमाह–

## मान्त्रवर्णिकमेव गीयते ॥१।१।१६॥

मन्त्रवर्णैः प्रतिपादितं मान्त्रवर्णिकम्। मन्त्राक्षरैर्यद्ब्रह्म निर्दिष्टं तदेव गीयते। मन्त्राक्षरैरानन्दमयता ब्रह्मणो निर्दिष्टा सैव मयापि व्यासेन गीयत उपदिश्यते। कैर्मन्त्राक्षरैर्ब्रह्मण आनन्दमयता निरदेशीति पृच्छ्यते चेन्निरदिक्षन्तैव कमसि, कं भुवनानां सुशेवः शेवृधमित्यादिभिः। अपरोप्ययं मन्त्रः "अकामो धीरो अमृतः स्वयंभू रसेन तृप्तो न कुतश्चनोनः। तमेव विद्वान्न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ॥" (अथ० १०।८।४४)। अस्मिन्मन्त्रे रसेन तृप्त इतिवचनं ब्रह्मण आनन्दमयताख्यापनार्थमेव ॥१।१।१६॥

जीवविषयकाणीमान्यक्षराणीति सन्दिहानं प्रत्याह–

## नेतरोऽनुपपत्तेः ॥१।१।१७॥

इतरो ब्रह्मेतरो जीवो न निर्दिश्यत एतैरक्षरैः। कुतः ?

---

१ व्याख्यातः।

अनुपपत्तेः। अनुपपत्तिरसिद्धिः। कीदृगनुपपत्तिः? शृणु। रसेन तृप्त इति बोधितम्। न हि कोपि जीवो रसेन कदाचिदपि तृप्तो दृष्टः श्रुतो वा। मुक्तौ तृप्त इति वचनमचारु। मुक्तावपि जीवत्वमजहतो मुक्तेतिविशेषणमादधतो जीवा भगवच्चरणारविन्दमहमहमिकया सेवमाना अविरतमभिनवरसमभितः कामयमानाः सन्तिष्ठन्त इत्येकेषां मतम्। अन्येषां च मते मुक्तिमितो जीवो जीव एव न भवति ब्रह्मत्वं चाधिगच्छति। कुतस्तर्हि मुक्तौ तृप्तो जीव इति साधूक्तिरायुष्मतस्ते स्यात्? अतस्तस्य रसेन तृप्तिप्रतिपादनमनुपपन्नतरम् ॥१।१।१७॥

नात्र ब्रह्मेतरस्य जीवस्य ग्रहणमित्यत्रैवापरमपि हेतुमाह—

## भेदव्यपदेशाच्च ॥१।१।१८॥

भेदस्य व्यपदेशो भेदव्यपदेशः। व्यपदेशो व्यवहारः। जीवानां परब्रह्मणोभेंदोपि व्यपदिश्यते। क्व? वेदेष्वेव। तथाहि, "सखायस्त इन्द्र [१]विश्वह स्याम" (ऋ०७।२१।९) इत्यनेन ब्रह्मणो नित्यसखित्वं प्रार्थ्यते। सखित्वं हि समानख्यातिमत्त्वम्। समानख्यातिमत्त्वं सत्येव भेदे भवति। हरिहरौ समानधर्माणावितिवत्। "नू चिन्नु ते मन्यमानस्य [२]दस्मोदश्नुवन्ति महिमानमुग्र। न वीर्यमिन्द्र ते न राधः॥" (ऋ०७।२२।८) इत्यनेन मन्यमानस्य ब्रह्मणो महिमानं न केपि प्राप्नुवन्तीत्यु-

---

(१) विश्वह नित्यम्। अन्यत्स्पष्टम्।

(२) दस्म उद् अश्नुवन्तीतिच्छेदः। दस्म दर्शनीय। सम्बुद्धौ रूपम्।

त्तम्। अत्रापि भेदस्यैवोल्लेदः। "वास्तोष्पते प्रति जानीह्य-स्मान्त्स्वावेशो अनमीवो भवा नः।" (ऋ०७।५४।१) हे जग-न्नियन्तरस्माञ्जीवांस्त्वं प्रति जानीहि रक्ष्यत्वेन स्वीकुरु। स्वा-वेशो भव। शोभन आवेशः प्रवेशोस्मासु जीवेषु त्वत्परायणेषु यस्य तथाभूतस्त्वं भव। अनमीवश्च भव। जन्ममरणरूपरोग-भोगभाक्त्वं नोपनयेत्यर्थः। अत्रापि भेदव्यपदेश एव। "न ते विष्णो जायमानो न जातो देव महिम्नः [1]परमन्तमाप।" (ऋ० ७।९९।२) इत्यनेनापि जीवब्रह्मणोर्भेदोभिहितः। शृण्वन्तु विश्वे अमृतस्य पुत्राः" (ऋ० ) इत्यत्रापि भेद एव निदर्शितः। न हि योमृतः स एव पुत्रत्वेन व्यपदेश्यः। पुत्राणां जनका-त्पितुर्भेदो न दुस्साधः। सूत्रे चः समुच्चयार्थकः ॥१।१।१८॥

ब्रह्मेतरस्य ग्रहणमेव निषेधति–

## कामाच्च नानुमानापेक्षा ॥१।१।१९॥

आनुमानस्यापेक्षानुमानापेक्षा। अनुमानेन गम्यमानुमा-नम्। शब्दप्रमाणानुगतं मानमनुमानम्। वेदानां स्वतः प्रामा-ण्यस्याधिगतत्वेन ते मुख्यं प्रमाणम्। साधनेन साध्यत्वात्तद-न्यदनुमानं भवति। अनुमानं हि गौणं प्रमाणम्। आनुमाने हि जीवजडे उभे अपि ग्राह्ये। यद्यपि निराकृतं जडग्रहणं प्रागेव तथापि द्विर्वद्धं सुवद्धं भवतीतिन्यायेन निराकृतस्यापि तस्य निराकरणार्थमेव पुनरुपादानम्। सामर्थ्याच्च। सर्गस्य कामे

(१) परम् अन्तम् आपेतिच्छेदः। अन्यत्स्पष्टम्।

सङ्कल्पे न जीवः शक्तः। अल्पशक्तित्वात्तस्य। न वा जडं जगन्निर्माणसङ्कल्पे शक्तम्। जडत्वेन कामयितृत्वाभावात्। एवं च कामात्=विविधाद्भुतसर्गकल्पसङ्कल्पदर्शनादानुमानयोर्जीवजडयोरत्र नापेक्षेतिसूत्रार्थः। मुख्यत्वेन जीवस्यैवात्र ग्रहणमानुमानपदेनेति विज्ञेयम्।

ननु प्राप्तस्यैव निषेधो भवति नाप्राप्तस्य। अस्ति केनापि गौणेनापि प्रमाणेन जीवस्य जडस्य वा कामयितृत्वप्राप्तिः? ओम्। अस्त्येव। कथम्? इत्थम्? "एकं यदङ्गमकृणोत्सहस्रधा" (अथ०१०।७।९) अनेन वेदवचनेन निखिलं जगत्परमात्मनोङ्गत्वेन प्राचीकशद्भगवान्वेदोपदेष्टा। स्वमेवाङ्गं सहस्रधा प्राचकाशद्भगवानितिकथनेन जीवजडयोरपि परमात्माङ्गत्वमेव प्राप्तम्। तदङ्गं तच्च न भिन्ने। तथा च ब्रह्मणो जगत्कारणतेव जीवजडयोरपि कारणता स्वत आपतिता भवति। "स एव जातः स जनिष्यमाण" (यजु०३२।४) इत्यनेन सर्वस्य तत्स्वरूपत्वमेव न्यरूपि। अतोपि ब्रह्मरूपतया जडाजडयोर्ब्रह्मण इव न तयोरपि कर्तृत्वमशक्यप्रतिपादनम्। एतैरन्यैश्च बहुभिर्वचनैरापाततो जीवजडयोर्जगत्कारणता संक्रामयितव्या भवति। सा च कारणता काममन्तरेण दुर्लभा। तथा च कामयितृत्वं तयोरप्युपतिष्ठते। तदपाकरणायैतस्य सूत्रस्यावतारः।

किं च नायं नियमः प्राप्तस्यैव प्रतिषेध इति। अप्राप्तस्यापि प्रतिषेधो दृश्यते। तथाहि "दिवा मा स्वाप्सी" रित्यस्वपतोपि दिवा वर्णिनो दिवास्वापप्रतिषेधः। दुर्जनमगच्छतोपि दुर्जनो न

गन्तव्य इतिदुर्जनगमनप्रतिषेधः । किमर्थमिदमुच्यतेप्राप्तस्यापि प्रतिषेधो भवतीति ? केवलं त्वादृशां बुद्धिविशोधनार्थम् । मा भूद्भ्रमः प्राप्तस्यैव प्रतिषेध इति ॥१।१।१९॥

न जीवस्य ग्रहणमित्यत्रापरमपि हेतुमन्तिमं निर्दिशति—

## अस्मिन्नस्य च तद्योगं शास्ति ॥१।१।२०॥

अस्मिन्नित्युपास्यनिर्देशः । अस्येत्युपासकनिर्देशः । तेन योगस्तद्योगस्तम् । तेनेत्यनेनोपास्यस्य ब्रह्मण एव ग्रहणम् । अस्मिन्परे ब्रह्मणि जीवस्योपासकस्य ध्यानोपासनादिद्वारा तद्योगं ब्रह्मणा सह योगं सायुज्यं च शास्ति शास्त्रम् । यद्य-त्रानन्दमयो जीव एव स्यात्प्रधानमेव वा स्यात्तद्योगशासन-मशिष्टं स्यात् । जीवोपासनया जीवस्य जीवयोग एव स्यात् । प्रधानोपासनया च जीवस्य प्रधानयोग एव स्यात् । जीवयोगेन न जीवः पारमार्थिकीं श्रियमाश्रयेत् । प्रधानयोगेनापि स्वोचितं चित्त्वमचेतयित्वा जडयोगमुपचित्याचार्वाचरितमन्तरेण नान्य-त्किमपि साधु साध्नुयात् । तद्योगशासनं तु वेदेषु । तथाहि, "वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे । अस्म-भ्यमिन्द्र वरिवः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ॥" (ऋ० १।१०२।४) इति । मन्त्रार्थस्तु, हे इन्द्र परमात्मंस्त्वया युजा युजो वयं वृतमत्याग्रहेण स्वीकृतमवश्यं प्राप्यतया निश्चितं मोक्षं जयेम जेष्यामः । भरेभरे रागत्यागयोः प्रतिसंग्राममस्माकं मुमुक्षूणामंशं भागं मोक्षमित्यर्थः । उदव सर्वथा रक्ष । अस्मभ्यं

वरिवः परमोत्तमं धनं मोक्षं सुगं सुखेनाधिगन्तव्यं कृधि कुरु। किं च हे मघवन्सर्वैश्वर्यसम्पन्न परमेश्वर शत्रूणां कामादीनां मोक्षमार्गप्रतिरोधकानां वृष्ण्यानि वीर्याणि बलानि प्र रुज सर्वथा भङ्ग्धीति। युजेति तृतीया छान्दसी। अयं मन्त्रस्त्व-येति युष्मदा तद्योगमेव शास्ति। तद्योगेनैव वृतार्थजिगीषा। तज्जयार्थं च तत्साहायकान्वेषणमप्युपदिष्टम्। एवं "वयं शूरे-भिरस्तृभिरिन्द्र त्वया युजा वयम्। सासह्याम पृतन्यतः॥" (ऋ० १।८।४) इत्यनेनापि "अस्तृभिस्त्वत्तो दूरं प्रक्षेप्तृभिर्जा-गतैः पदार्थैः संगता वयं त्वया युजा साहाय्येन त्वयैव संगता वा पृतन्यतः शत्रूंस्त्वत्प्राप्तौ प्रतिबन्धकीभूतान्भौतिकपदार्थान्सा-सह्याम प्रधृष्णुयामे" त्युक्तम्। इदं सर्वं परमचेतने सर्वेषां चेत-यितरि परमात्मन्येव संगच्छते न त्वचेतने प्रधाने चेतनेपि वा जीवेल्पकल्पे। अतस्तद्ब्रह्मैवानन्दमयं न जीवो न वा प्रधानम्।

ननु तद्ब्रह्मानन्दमयमित्युच्यते भवद्भिरानन्दमयशब्देन ब्रह्मैवोच्यत इति किं नोच्यते? नोच्यते तथा, तत्र कारणं ब्रूमः। अयं हि दर्शनग्रन्थः। विचारस्वातन्त्र्यं यन्त्रयित्वा परवदनवदना-पेक्षितया दर्शनत्वाद्धीयेतायम्। न ह्युपनिषदक्षराणि वेदाक्षराणि वा विवरीतुमस्य प्रवृत्तिः। स्वातन्त्र्येणैव ब्रह्ममीमांसा भगवता व्यासेन कर्तव्या। यथाज्ञानं यथानुभवं च तेन सर्वं विचारणी-यमुपदेष्टव्यं च। यद्यप्यस्माभिरिदमङ्गीक्रियते शास्त्रपरवान्हि भगवान् व्यास इति। तस्य विचारवर्त्म शास्त्राधिकृतमेव। तथापि न स शास्त्रार्थविचारे प्रवृत्तः। ब्रह्मविचारार्था हि तत्प्रवृत्तिः।

तत्र प्रकरणानुरोधेन विचारानुरोधेन च यस्याः कस्याश्चिच्छ्रु-तेरुदाहरणं न न्याय्यापहरणं करोति। परन्तु व्याससूत्राणा-मवतार औपनिषदानां वाक्यानां पदानां शब्दानां प्रकरणानां चार्थनिर्णयार्थैवेति नास्मद्विचारारूढोऽर्थः। अत एवानन्दमयशब्देन किं ग्राह्यमिति नास्माभिर्विचार्यते विचार्यते च कीदृशं ब्रह्मेति।

ननु "येनैव पितरो याता येन याताः पितामहाः" इत्या-र्यपरम्परा दूषणा भवतीति चेन्न भेतव्यम्। न हि परम्परापूरणं धर्मः। भवभीतिभिद्धेतुस्त्ववतारणीयः। स एव धर्मः। न हि धर्मस्य किञ्चिन्नियतमनुगतं च स्वरूपम्। ब्रह्मातिरिक्तं सर्वं परिवर्ति। परिवर्तते च भगवान् धर्मः। वस्तुपरिवृत्तिरेव वस्तू-ज्जीवयित्री। अवरुद्धं निष्प्रवाहं च पानीयमपानीयं भवति। निरुद्धोनलो नालं चिरं स्वं धारयितुम्। अनिर्गमनो हि पवनो भवनं दूषयति। अपरिवर्तमानं हि रुधिरं निरुणद्धितरामारोग्य-धराम्। येन गच्छतां विकासोवकाशमृच्छति स एव साधिष्ठः पन्थाः। वर्त्मपरिवर्तनं नावर्तयति दोषं न वा प्रवर्तयति निरय-निवासम्। सत्येन वर्तितव्यम्। प्रजाभ्युदयाय प्रयतितव्यम्। मोहानोकहो न संवर्धनीयः। अज्ञाननिधाननिदानसन्दानितानां बन्धनोच्छेदाय कथञ्चिदुदितया दयया प्रयास आसेवनीयः। एष एव परमो धर्मः ॥१।१।२०॥ इत्यानन्दमयाधिकरणम् ॥६॥

( अथान्तरधिकरणम् ॥७॥ )

वेदेषु प्रसिद्धानां लोकेष्वप्रसिद्धानां च बहूनां शब्दानां ब्रह्मबोधकत्वमिति प्रबोधयितुमाह—

## अन्तस्तद्धर्मोपदेशात् ॥१।१।२१॥

अन्तरपि ब्रह्मैव। अन्तरितिशब्देनापि ब्रह्मैव ग्रहीतव्यमित्यर्थः। कस्मात्? तद्धर्मोपदेशात्। तस्य ब्रह्मणो ये स्वात्मगता धर्मास्तेषामुपदेशात्तत्र। सर्वासु दिक्षु सर्वेषु च भुवनेषु निरन्तरवृत्तितान्तर्यामिता च केवलं ब्रह्मण्येव संगच्छेते नान्यत्र। कुत्र तथाविध उपदेशः? वेदे। तथाहि, [१]"अन्तर्दूतो रोदसी दस्म ईयते होता निषत्तो मनुषः पुरोहितः। क्षयं बृहन्तं परि भूषति द्युभिर्देवेभिरग्निरिषितो धियावसुः॥" (ऋ०३।३।२) "अग्निर्देवेभिर्मनुषश्च जन्तुभिस्तन्वानो यज्ञं पुरुपेशसं धिया। रथीरन्तरीयते साधदिष्टिभिर्जीरो दमूना अभिशस्तिचातनः॥" (ऋ०३।३।६)। अत्रोभयोरेवर्चयोरन्तःशब्दो ब्रह्मवाचकः। अमति गच्छतीत्यन्तर्। अम गत्यादिषु। रोदसी रोदस्योर्द्यावापृथिव्योर्दस्मो दर्शनीयो दूतो दुराधीनामुपतापकोऽन्तः सर्वव्यापकः परमात्मा धियावसुर्ज्ञानद्वारा व्यापको भवन्नपीयते गच्छन्निव प्रतीयते। अग्निः स्वयंप्रकाशस्वरूपो रथी ज्ञानिनां रमयितान्तः सर्वव्यापक ईयत इत्येष तद्वाक्यार्थः। "स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः" (शु० य०३७।१७) "एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः" (शु०य०३२।४) अत्राप्युभयोर्मन्त्रयोरन्तः-

---

(१) अन्तः सर्वव्यापकः स परमात्मा सध्रीचीः सहाञ्चना विषूचीर्विष्वगञ्चनाश्च कारुण्यवात्सल्यादिका वृत्तीरिच्छाः स्वरूपधर्मान्वा वसान आच्छादयन्स्वस्मिन्रक्षन्नित्यर्थः, भुवनेषु आ वरीवर्ति अतिशयेन नैरन्तर्येण वर्तते।

पदवाच्यस्य ब्रह्मणः सर्वत्र वृत्तितावर्तिता वर्तते। ब्रह्मणः सर्व-व्यापकत्वादिषु धर्मेषु कतिचिद्धर्मा इहोपदिष्टा द्रष्टव्याः। एवं चैतेषां मन्त्राणां पूर्वापरालोचनया ब्रह्मधर्मा अन्तःशब्देनोपदि-श्यन्त एवेति स्पष्टम् ॥१।१।२१॥

ननूपरिसङ्केतितेषु तेषु तेषु मन्त्रेषु कथं न कस्यचिज्जीव-स्यैव ग्रहणं कर्तव्यम्? कः स्याद्धेतुस्तद्ग्रहण इति चेत्; कर्मा-धीनो जीवोपि द्यावापृथिव्योर्भुवनेषु दिक्षु प्रदिक्षु च समवाप्नोति। सोपि तदणुत्वपक्षरक्षाशिक्षाप्रेक्षितानां मते शिरसि मम वेदना पादे मे वेदनेतिवेदनानां वेदनयौगपद्यसम्पादनार्थं धियावस्तु-रेव। किं चैयत इत्ययनक्रिया श्रूयते। अयनायने च रूप-वतः शरीरिण एव संभवतः। न हि रूपवच्छरीरि च परं ब्रह्म। अकायमव्रणमि (शु०य०४०।८) तिवचनात्। अतस्तत्तत्स्थलेषु जीवस्यैव विज्ञानं न तु परस्य ब्रह्मण इत्याशङ्कायामाह—

## भेदव्यपदेशाच्चान्यः ॥१।१।२२॥

सर्वत्रैव ब्रह्मणो जीवस्य च भेदो व्यपदिश्यते। तस्माद-न्यदेव तद्ब्रह्म यस्मात्कस्मादपि जीवात्। क्वास्ति भेदव्यपदेशः? सर्वत्रैव वेदेषु। तथा हि, "तेजोसि तेजो मयि धेहि" "य आत्मदा बलदा यस्य विश्व उपासते" "अग्ने नय सुपथा राये अस्मान्" "सर्वतो नः शकुने भद्रमा वद विश्वतो नः शकुने पुण्यमा वद" (ऋ०२।४३।२) "त्वमग्ने प्रथमः"

(ऋ०१।३१।१) "देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे" (ऋ०१।९४।१३) इत्यादिषूपास्यभूतात्परब्रह्मण उपासकस्य जीवस्य पार्थक्येन ग्रहणम्। "आ नो यज्ञं दिविस्पृशं वायो याहि" "अग्न आ याहि वीतये" इत्यादिषु यदायानं श्रूयते तच्चौपचारिकम्। अत एव "स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः" इति तस्य सर्वत्रस्थिता श्रूयते। कस्माच्चिदवकाशादागवतवतो भगवतो न स्यात्पूर्वस्थाने स्थितिता ततश्च सर्वस्थितित्वं वेदैरेवोपदिष्टं व्याहन्येत। सर्वत्र वर्तमानस्य कुतः कुत्र च यानायाने संभवेताम्? एवं च यानायानश्रुत्या न ब्रह्मणो रूपवत्त्वशरीरित्वाद्यापत्तिः। न वा "अकायमव्रणमि" तिश्रुतिवचसा विरोधापत्तिः। अथवा भवतु नाम ब्रह्म शरीरि का वो हानिः? शरीरित्वे ब्रह्मणोनित्यत्वापत्तिरेव महती हानिरितिचेन्न। न हि शरीरित्वमनित्यत्वेन व्याप्तम्। जन्यत्वं हि व्याप्तमनित्यत्वेन। न हि ब्रह्मणः शरीरं जन्यं जातं वा। अनादिनस्तस्य सर्वमनाद्येव। अजन्मनस्तस्य सर्वमजन्मैव। सर्वद्रष्टृणः सर्वश्रोतृणः सर्वशक्तिनश्च तस्य शरीरं तदतिरिक्तसकलशरीरविलक्षणमेव। न च ब्रह्मशरीरोपपादनमवैदिकमिति वाच्यम्। "अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्।" (ऋ०१।३२।१०) इत्यत्र कल्पनाभिमतानामत एवानिवेशनानां परिवर्तनशालिनीनां काष्ठानां मध्ये ब्रह्मणः शरीरनिधानस्यातीव स्पष्टतया प्रतिपादनात्। यद्दृष्टान्तेन ब्रह्मशरीरस्यानित्यत्वमातिष्ठते न स दृष्टान्तो दृष्टान्तपदवीमव-

गाहते । पाञ्चभौतिकमत एव जन्यं दृश्यं च जीवशरीरं शुभाशुभकर्मफलफलितम् । न तथा ब्रह्मशरीरम् । पाञ्चभौतिकत्वाभावादजन्यत्वाददृश्यत्वाच्च नैव स्पृशति ब्रह्मशरीरमनित्यत्वापत्तिसमापत्तिरिति ॥१।१।२२॥ इत्यन्तरधिकरणम् ॥७॥

(अथाकाशप्राणाधिकरणम् ॥८॥)

## आकाशस्तल्लिङ्गात् ॥१।१।२३॥

आकाशशब्देनाकाशार्थकशब्दैश्चापि ब्रह्मोच्यते वेदेषु । यत्राकाशशब्दस्तदर्थको वा कश्चिच्छब्दो दृश्येत तदर्थो ब्रह्मेत्यवगन्तव्यम् । कुतः ? तल्लिङ्गात् । तस्य ब्रह्मणो लिङ्गं तल्लिङ्गं तस्मात् । यदि ब्रह्मणो लिङ्गं तत्र प्रतीयेतावश्यं तस्य ब्रह्माभिधेयं स्यादित्यर्थः । अलिङ्गस्यापि ब्रह्मणः शाखारुन्धतीन्यायेन यैर्यैर्लिङ्गैरवगतिः प्रतिबोधिता तानि लिङ्गानि तत्र तत्र पठितेष्वाकाशार्थकेषु शब्देषु श्रूयेरंश्चेत्तेषामपि ब्रह्मबोधकतावबोध्येतिभावः । यथा—[1]"नभोसि प्रतक्वा" (शु०य०५। ३२) "खं ब्रह्म" (शु०यजु०४०।१७) [2]"ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः" (ऋ० १।१६४।३९)

---

(१) नभो न भाति लौकिकैरिन्द्रियैस्तथाविधोपि प्रतक्वा सर्वत्रगमनशीलो व्यापकोसि । तक्रतिर्गत्यर्थः ।

(२) अक्षरेविनाशिनि अस्मिन्परमे व्योमनि व्योमसदृशे विशेषेग जगद्रक्षके वा सर्वव्यापके वा परमात्मनि ऋच ऋगादयो वेदा देवाः प्रतोयमानाः सर्वे पदार्था अधि निषेदुः स्थिताः सन्ति । परमात्मानमाश्रित्यैव सर्वेषामवस्थितिरितिभावः ।

[1]"सहस्राक्षरा परमे व्योमन्" (ऋ०१।१६४।४१) [2]"विश्वे देवाः पुष्करे त्वाददन्त" (ऋ०७।३३।११) [3]"एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे" (ऋ०१०।११४।४) [4]"पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परि यातो अध्वरम्। विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः ॥" (ऋ०१०।८५।१८) इत्यादिषु मन्त्रेषु नभःखव्योमपुष्करसमुद्राध्वरादयः शब्दा आकाशार्थकास्तेत्र ब्रह्मैवावबोधयन्ति। तेषु ब्रह्मण एव ऋगाधारत्व–देवाधारत्व-सूर्यचन्द्रगम्यत्वादीनां लिङ्गानां दर्शनात् । नैतानि लिङ्गान्यवगम्यमानेस्मिन्नाकाशे भौतिके संभवन्ति ॥१।१।२३॥

## अत एव प्राणः ॥१।१।२४॥

अत एव तल्लिङ्गादेव प्राणोपि तत्र तत्र वेदेषु व्यवह्रिय-

---

१ सहस्राक्षरा बह्वक्षरपादोपेता गौर्यो वाचः परमे व्योमनि परमात्मनि स्थिता इत्यर्थः ।

२ पुष्करे सर्वपोषणकर्तरि परमात्मनि त्वयि स्थिता विश्वे सर्वे देवा विद्वांसस्त्वा त्वामददन्त अधारयन्धारयन्ति च ।

(३) एकः सुपर्णः शोभनपालनयुक्तः स जीवः समुद्रं कृपासलिलेनार्द्रं कुर्वाणं परमात्मानमा विवेश आविशति । स च परमात्मेदं विश्वं सकलं भुवनं वि चष्टे विशेषेण पश्यति ।

(४) अस्या ऋचः सूर्याचन्द्रमसौ देवते । एतौ सूर्याचन्द्रमसौ शिशू इव क्रीडन्तौ मायया प्रज्ञानेनेव पूर्वापरं पौर्वापर्येण चरतश्चलतः, अध्वरमविनाशिनमाकाशवद्व्यापकं वा परमात्मानं परि यातः परितो गच्छतः । अन्यत्स्पष्टम् ।

प्राणः प्राणशब्दोपि तदर्थकशब्दोपि च ब्रह्मैव बोधयति। तथा हि—"साम प्राणं प्रपद्ये" (शु०य० ३६।१)। प्रपदनं रक्षाग्रहणाय स्वाश्रयाभिमानापसारपुरस्सरस्वरक्षासमर्थपराश्रयोपसरणम्। प्रपदनेन प्राप्तस्य रक्षणरूपलिङ्गदर्शनादत्र प्राणशब्दोपि ब्रह्मपरक एव। "[1]भूम्या असुरसृगात्मा क्व स्वित्को विद्वांसमुप गात्प्रष्टुमेतत्" (ऋ० १।१६४।४) इत्यत्र "ततो देवानां समवर्ततासुरेकः कस्मै देवाय हविषा विधेम" (ऋ० १०।१२१।७) इत्यत्र चासुशब्देन ब्रह्मण एव ग्रहणम्। प्राणासुशब्दयोर्ब्रह्मवाचकत्वं तल्लिङ्गादेव ॥१।१।२४॥ इत्याकाशप्राणाधिकरणम् ॥८॥

( अथ ज्योतिरधिकरणम् ॥९॥ )

## ज्योतिश्चरणाभिधानात् ॥१।१।२५॥

ज्योतिरित्यपि ब्रह्मनामैव। कुतः ? चरणाभिधानात्। चरणं चलनम्। चर गतिसंचलनयोश्चर गतिभक्षणयोर्वा। भावे ल्युट्। चलनस्य गतेरभिधानात्—उपवर्णनात्। उपासनादिप्रकरणेषु समागतो ज्योतिश्शब्दो ब्रह्मवाचक एव। तत्रैव गतिसम्भवात्। ननु सर्वव्यापकस्यापादस्य च तस्य कुतो गतिसम्भव इति चेत्। उच्यते। सर्वव्यापकत्वात्सर्वतः स्थितः स गतिमानिव प्रतीयते। यत्रैव गम्यते तत्रैव स भवतीति लोकसंभावनया गतिर्निर्दिष्टा। क्व ? वेदे। तथा हि, "दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसङ्कल्पमस्तु" (शु०य० ३४।१) मन्त्रार्थस्तु,

(१) भूम्या असुः प्राणतुल्योसृक् सर्वप्रलयकर्तात्मा परमात्मा क्व स्वित्कुत्रासीदित्येतत्प्रष्टुं को विद्वांसमुपगाद् गच्छति वा ?

तज्ज्योतिर्ब्रह्म ज्योतिषां सूर्यवह्निविद्युदादीनामपि दूरंगमं दुष्प्रापमित्यर्थः। तेषामप्युज्जीवकमित्यर्थः। तच्चैकम्। तच्च मनो ज्ञानरूपम्। तन्मे मह्यं शिवः सङ्कल्पो यस्य तथाविधं मत्कल्याणैकसङ्कल्पं भवत्वित्यभ्यर्थना। अस्मिन्मन्त्रे सङ्कल्पविकल्पात्मकस्यान्तःकरणरूपस्य मनसो वर्णनं न तु ब्रह्मण इति न भ्रमितव्यम्। स्यात्कदाचिन्मनसोपि वर्णनम्। बह्वर्था हि मन्त्राः। सर्वतोमुखी हि मन्त्राणां प्रवृत्तिः। ब्रह्मणस्तु वर्णनमिह स्पष्टतरम्। यदि मनसो लौकिकस्यैवात्र ग्रहणके संख्यानमभविष्यत् यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु" (शु० म० ३४।३) इत्यत्र "येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम्" (शु० य० ३४।४) इत्यत्र चामृतपदं न प्रायोक्ष्यत। ब्रह्मैवामृतं न तु लौकिकं मनः। किं च यदि लौकिकमेव मनोत्राभिप्रेत स्यात् "यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः" इत्यत्र यस्मिन्निति पदेन मन एव गृहीतं स्यात्। तथा च "मनसि प्रजानां सर्वं चित्तमोतमित्यर्थः प्रतीयेत। स चानुपपन्नः। न मनसि चित्तमोतं भवति प्रजानाम्। नास्ति मनश्चित्तयोर्वस्तुतो भेदः। मनोवस्थान्तरमेव चित्तमितिसर्वसिद्धान्तः। उभयोः पर्यायवाचकत्वमित्यपि बहवः। अतः सूष्ठूदाहृतं ज्योतिषां ज्योतिरेकमिति। तच्च दूरंगममप्यन्तिकस्थमपि च। "ज्योतिर्य-

(१) मधु मधुरं प्रियं ज्योतिः प्रकाशकं ब्रह्म यज्ञस्य सर्वोत्कृष्टकर्मणः कर्तारं ज्ञानिनं भक्तं च पवते पुनाति। गच्छतीति वा। देवानां दिव्यपदार्थानां जनितोत्पादयिता पिता रक्षकश्च स एव परमात्मा। विभुवसुश्च सर्वेषां वासयितापि स एव।

ज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः।" (ऋ० ९।८६।१०) इत्यत्र [1]"ज्योतिर्यज्ञाय रोदसी अनु ष्यादारे स्याम दुरितस्य भूरेः" (ऋ०३।३९।८) इत्यत्र च [2]"ज्योतिर्वृणीत तमसो विजानन्नारे स्याम दुरितादभीके" (ऋ०३।३९।७) इत्यत्र च ज्योतिःशब्दो ब्रह्मार्थक एव। चरणाभिधानात्। "ज्योतिर्यज्ञस्य पवते" इत्यत्र पवत इत्यस्य गच्छतीत्यर्थः। पवते इति गत्यर्थकर्मा (निघ०२।१४।१०८)। भासिरपि गतिरेव। तथा च "ज्योतिर्वृणीत" इत्यत्रापि ज्योतिर्वरणप्रतिपादनेन चरणमेवाभिधीयते।

किं च न हि चरणशब्देन चलनमात्रं विवक्षितम्। उदाराणि हि वेदाक्षराणि। अल्पाक्षरा अपि वेदा बह्वर्थद्योतकाः। तस्माच्चलनं चालनं नयनं भक्षणं रक्षणमित्याद्या अप्यर्थाः संगृहीता वेदितव्याः। अत्र चोदाहरणानि—[3]"ज्योतिरसि विश्वरूपम्" (शु०य०५।३५) [4]"अग्निर्ज्योतिषा ज्योतिष्मान्" (शु०य० १३।४०) [5]"अग्ने रक्षा णो अंहसः" (ऋ०७।१५।१४)

(१) ज्योतिः परमात्मा रोदसी द्यावापृथिव्योर्यज्ञाय अनु ष्यात् सर्वोत्कृष्टकर्मानुभवतु प्रकाशयतु। उत्तमे कर्मणि नियोजयत्वस्मानित्यर्थः। येन, भूरेः प्रभूताद् दुरितस्य दुरिताद् दुष्कर्मणः पापाद् आरे दूरे स्याम।

(२) तमसोज्ञानस्य विजानन्दोषादिकं, ज्योतिः परमात्मानं वृणीत येन दुरितात्पापादारे दूरे स्थिताः सन्तो वयमभीके निर्भीके तस्मिन्नेव ज्योतिषि परमात्मनि स्याम निरताः स्याम।

(३,४) निगदव्याख्यातौ।

(५) हे अग्ने परमात्मन् अंहसः पापादस्मान्रक्ष।

[1]"अग्निर्दिव आ तपतु" (अथ०१२।१।२०) [2]"सूर्यो नो दिवस्पातु" (ऋ०१०।१५८।१) [3]"वैश्वानर तव धामानि आ चक्रे" (ऋ०३।३।१०) [4]"सोमो अस्मभ्यं द्विपदे चतुष्पदे च पशवे। अनमीवा इषस्करत्।" (ऋ०३।६२।१४) "हिरण्यरूपः स हिरण्यसंदृक्" (ऋ०२।३५।१०) इत्यादयो ज्योतिरर्थाभिधायका अग्निसूर्यसोमवैश्वानरहिरण्यरूपादयोऽपि ब्रह्मैवाभिदधति। चरणाभिधानादेव हेतोः। उपासकानिष्टलाभं नयन्ति। लौकिकमपि ज्योतिश्चरणशीलमेव। तथापि तन्मात्रानुगृह्यते। इहापि तल्लिङ्गादित्यस्यानुकर्षणेन तत्र तल्लिङ्गाभावात् ॥१।१।२५॥

अत्र स्वयमाशङ्क्य समाधत्ते—

**छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॥१।१।२६॥**

छन्दः स्वातन्त्र्यं रुचिश्च। पूर्वोक्तेषु वैदिकवचनेषु च्छन्दोभिधानं रुच्यनुसरणं विद्यते। यथारुचि स्वातन्त्र्येण ज्योतिरग्न्यादयः शब्दा ब्रह्मणि नेतव्या लौकिकेषु वा मनोनलसूर्य-

---

(१,२) निगदव्याख्यातौ।

(३) हे वैश्वानर विश्वेषां नराणां हितसाधक परमात्मन् तव धामानि तेजांसि ज्ञानानि आ चक्रे अभितः स्तौमि। तव ज्ञानैः सर्वथा तृप्तिमनुभवामीति वा।

(४) सोमः सोमवच्छीतलः परमात्मास्मभ्यं मनुष्येभ्यो द्विपदे द्विपद्भ्यः पशवे पशुभ्यश्च चतुष्पदे चतुष्पद्भ्योनमीवा रोगरहितानि इषोन्नानि करत् करोतु।

सोमादिष्विति नासन्दिग्धं प्रमाणम्, इति चेत्, न तथा=असन्दिग्धं प्रमाणं नेति न। कुतः? चेतोर्पणनिगदात्। चेतसोर्पणं चेतोर्पणं तस्य निगदो विस्पष्टोच्चारणम्। "यस्मिंश्चित्तं सर्वमोतं प्रजानाम्" इति स्पष्टमेव यत्पदार्थे चित्तार्पणं निगद्यते। "अग्ने रक्षा णो अंहसः" "वैश्वानर तव धामानि आ चक्रे" "सूर्यो नो दिवस्पातु" इत्यादिषु च सर्वत्र स्वेष्टपूर्तये संप्रार्थनम्। प्रार्थनं च चेतःसमर्पणपूर्वकमेव कृतं कृतकार्यं भवति। तथाहि दर्शनम्=दृष्टमपि तथैव भवति। सर्वैश्चित्तार्पणं परब्रह्मण्येव क्रियते न तु लौकिके सुलभे श्रमलभ्ये वा पदार्थे। अत एव "तन्मे मन" इत्यत्र मनःशब्दो न लौकिकमनोवाचकः। विशेष्यं तु तस्मिन्मन्त्रे ज्योतिरेव। तत्रान्यत्र च लौकिकस्य ज्योतिषोऽग्न्यादेरेव ग्रहणमिति मा भ्रमो भूदिति कृपापारतन्त्र्यात्तत्त्वार्थो निरूपितोत्र भगवता व्यासेन ॥१।१।२६॥ इति ज्योतिरधिकरणम् ॥९॥

( अथ भूतादिपादापदेशाधिकरणम् ॥१०॥ )

## भूतादिपादोपदेशोपपत्तेश्चैवम् ॥१।१।२७॥

भूतादिषु पादोपदेशो भूतादिपादोपदेशस्तस्योपपत्तिः। तस्याः। पादशब्देन सर्वाण्येवाङ्गान्युपलक्ष्यन्ते। तानि च ब्रह्मण एव। उपपत्तिः सिद्धिः। भूतादिषु ब्रह्माङ्गोपदेशो वेदेषु विद्यते। तस्योपपत्तेः सिद्धेः, एवम्=एवंभूतं हि तत्। भूतादिषु ब्रह्मणो हस्तपादाद्यवयवनिरूपणेन भूतादिरूपं हि तदितिसूत्रार्थः। न

केवलमाकाशरूपं तत्, न केवलं प्राणरूपं न वा केवलं ज्योतीरूपं हि तत्। सर्वमेव तस्य रूपम्। सर्वमेव तत्। तथा हि श्रुतयः, [1]"यस्य भूमिः प्रमान्तरिक्षमुतोदरम्। दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः॥" [2]"यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः। अग्निं यश्चक्र आस्यं तस्मै०" [3]"यस्य वातः प्राणापानौ चक्षुरङ्गिरसोऽभवन्। दिशो यश्चक्रे प्रज्ञानीस्तस्मै०" (अथ० १०।७।३२–३४) [4]"पादोऽस्य विश्वा भूतानि" (ऋ० १०।९०।३) [5]"तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः। तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः॥" (शु०य० ३२।१) [6]"रूपं रूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्" (ऋ० ३।५३।८) इत्याद्याः। सहस्रशीर्षेत्यादिनापि भगवतो विश्वरूपत्वमेव न्यरूपि ॥१।१।२७॥

अत्र विरोधमुद्भाव्य समाधत्ते—

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्॥ ॥१।१।२८॥

उपदेशस्य भेद उपदेशभेदस्तस्मात्। उपदेशभेदो विद्यते

---

(१, २, ३) निगदव्याख्याताः।

(४,५) निगदव्याख्यातौ।

(६) मघवा परमपूजास्पदो हि परमात्मा माया मायाभिः स्वाद्भुतशक्तिभिः स्वां स्वकीयां तनुं परि कृण्वानो विविधप्रकारं कुर्वन् रूपंरूपं बोभवीति यद्यद्रूपं कामयते तत्तद्रूपेण युक्तो भवतीत्यर्थः।

तस्मान्न ज्योतिरादिशब्देन परमात्मनो ग्रहणम् । कीदृगुपदेश-भेदः ? ईदृक्--[1]"इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व । संवेशने तन्वश्चारुरेधि प्रियो देवानां परमे जनित्रे ॥" (ऋ०१०।५६।१) [2]"अहुतो महो धरुणाय देवान्दिवीव ज्योतिः स्वमा मिमीयाः ।" (ऋ०१०।५६।२) "ज्योतिरसि विश्वरूपं विश्वेषां देवानां समित् ।" (शु०य०७।३५) "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः ॥" (ऋ०१०।१९०।३) इत्यादिषु मन्त्रेषु सूर्यचन्द्रादीनां जनकत्वमपि ब्रह्मणि प्रतिपादितम् । कथं हि यो यस्य जनकः स तद्रूपो भवितुमर्हति ? न हि देवदत्तजनको यज्ञदत्तो देवदत्तरूपतां प्रतिपद्यत इति चेत् न । नैष दोषः । कुतः ? उभयस्मिन्नप्यविरोधात् । कार्यकारणभावयोरुभयोरप्यवस्थयोरवस्थिते तस्मिन्नुभयोरेव धर्मयोः संभवादविरोधः । यवाज्जायमानोपि यवो यव एव । यवस्योत्पादयितापि यव एव । यवस्योत्पाद्योपि यव एव । ननु यवानां बहुत्वे संभव-

---

(१) इदं जगत् ते तव एकमेकेन ज्योतिषा दिवा प्रकाशते । एकमन्यज्जगत्ते तव परेण ज्योतिषा चन्द्राख्येन नक्तं प्रकाशते । तृतीयेनालौकिकेन ज्योतिषा सं विशस्व सर्वं जगद्व्याप्नुहि व्याप्नोषि । देवानां विदुषां तन्वः ज्ञानस्य संवेशने संवेशनं स्थितिः परमे जनित्रे जनयितरि त्वयि परमात्मनि भवतु । त्वं देवानां चारुः प्रिय एधि भव ।

२ अहुतोचलस्त्वं दिवि द्युलोके देवान् देवानां धरुणाय धारणाय स्वं ज्योतिः आ मिमीयाः प्रविश ।

त्येवं कश्चिच्च कर्ता कश्चिच्च कार्य इति। न हि स एव यव उत्पादकः स एव चोत्पाद्यः। उभावपि भिन्नौ। नैवं ब्रह्मबहुत्वं लोकवेदसिद्धम्। कथं तर्हि दोषपरिहारः? कार्यकारणयोरभेदावग्रहादिति। अथवा ब्रह्मणो जातमपि सर्वं ब्रह्मैव। ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगदितिवचनात्कस्यापि पदार्थस्य न कोप्यंशो ब्रह्मविरहितो बोद्धव्यः। उपरिष्टादधस्तादन्तश्च सर्वत्रैव व्याप्यावस्थितं ब्रह्मान्तरा न वस्त्वस्तित्वं भजते। यथा यवाज्जातेषु यवेषु सर्व एव तद्यवधर्माः सुरक्षिता एवं ब्रह्मणो जातेषु दिवाकरनिशाकरादिषु ब्रह्मणो विच्छित्त्युच्छ्रायकाः सर्व एव धर्माः समवस्थिताः। ततश्च सर्वं ब्रह्मैव। किंच नानेनाधिकरणेन सर्वं ब्रह्मैवेत्येव प्रत्याय्यते, प्रत्याय्यत एव भूतादिरपि। विश्वरूपे परमात्मनि विरुद्धाविरुद्धधर्मयोः समान एवावकाशः। अतश्च मा भूत्कस्यापि संशयकुशेशयकिसलयाशयशयितेति ॥१।१।२८॥ इति भूतादिपादोपदेशाधिकरणम् ॥१०॥

( अथ प्राणाधिकरणम् ॥११॥ )

यद्यपि पूर्वमाकाशप्राणाधिकरणे प्राणोपि तत्तत्प्रकरणे ब्रह्मैवेति संक्षेपेणावधारितं तथापि किञ्चिदधिकं वक्तुमधिकरणमिह पुना रचयति—

## प्राणस्तथानुगमात् ॥१।१।२९॥

प्राणशब्देनापानव्यानोदानसमानादयोन्ये च वाय्वर्थकाः सर्वे शब्दा ग्रहीतव्याः। "प्राणा वै मारुताः" (शतं० ९।३।१।७)

इतिवचनात्। प्राणोपि ब्रह्मवाचकः शब्दः। कस्मात्? तथानुगमात्। अनुगमोनुभवः। तथैवानुभवो भवतीति सूत्रार्थः। अथर्ववेदे श्रूयते–[1]"प्राणाय नमो यस्य सर्वमिदं वशे। यो भूतः सर्वस्येश्वरो यस्मिन्सर्वं प्रतिष्ठितम् ॥" (अथ०११।३।१) [2]"प्राणः प्रजा अनु वस्ते पिता पुत्रमिव प्रियम्। प्राणो ह सर्वस्येश्वरो यच्च प्राणति यच्च न॥" (अथ०१३।३।१०) [3]"प्राणो मृत्युः प्राणस्तक्मा प्राणं देवा उपासते। प्राणो ह सत्यवादिनमुत्तमे लोक आ दधत् ॥" (अथ०११।३।११) [4]"प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते। प्राणो ह भूतं भव्यं च प्राणे सर्वं प्रतिष्ठितम् ॥" (अथ०११।४।१५) [5]"प्राण बध्नामि त्वा मयि" (अथ०११।३।२६) [6]"प्राण प्राणं त्रायस्व" (अथ०१९।४४।४) "प्राणाय स्वाहा" (यजु०२३।१८) [7]"अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः" (ऋ०१।८७।६) इत्यादिषु श्रुतिषु प्राणमारुतवातादिशब्दा ब्रह्मण एव बोधकाः। कुतः? तथानुगमात्। तथैवानुगमो भवति। न हि लौकिके प्राणे सर्वस्य चराचरस्य प्रतिष्ठा संभवति। संभवति च ब्रह्मणि सा सुतराम्। सामर्थ्याद्ब्रह्मण एव तत्रानुगमो भवति न तु लौकिकस्य प्राणस्य। अतः प्राणस्तदर्थका अन्ये वा शब्दा तत्तस्थलेषु ब्रह्म-

---

(१, २) निगदव्याख्यातौ।

(३) तक्मा व्यापकः। तकतिर्गतिकर्मा। अन्यत्स्पष्टम्।

(४, ५, ६) निगदव्याख्याताः।

(७) अभीरवो निर्भीका जनाः प्रियस्य सर्वप्रियकरस्य मारुतस्य परमात्मनो धाम्नो धाम विद्रे विविदिरे।

वाचका एव ।

अथवा प्राणशब्देनेहाथर्ववेदप्रतिपदिता (अथ० १५।१५। ३-९) अग्निरादित्यश्चन्द्रमाः पवमान आपः पशवः प्रजा इत्येते सप्त पदार्थां ग्राह्याः । अमी अप्यखिला ब्रह्मवाचका एव। एवं चाकाशप्राणाधिकरणादस्य प्राणाधिकरणस्य भेदोपि स्फुटो भवति। किंच तत्र तल्लिङ्गदर्शनात्प्राणस्य ब्रह्मवाचकत्वमत्र त्वनुभवादितीयान्विशेषः ॥१।१।२९॥

अत्रोत्थितामुत्थापितां वा शङ्कां समादधान आह—

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥१।१।३०॥

न—प्रागुक्तं तन्न। कुतः ? वक्तुरात्मोपदेशात्—वक्तुरुपदेष्टुऋंषेरात्मोपदेशात् । अयमाशयः । वेदेषु प्रायेण सर्व एव मन्त्रा उपदेश्योपदेष्टारौ प्रकल्प्यैव प्रवृत्ताः। कश्चिच्छ्रोता कश्चिच्च वक्ता। कश्चिदुपदेश्यः कश्चिच्चोपदेष्टा। "तेजोसि तेजो मयि धेही"ति यथा। अत्राचार्यः शिष्याञ्शिक्षयति तेजोसीतिरीत्या युष्माभिः प्रार्थ्यं परं ब्रह्मेति। "विद्मे प्रियस्य मारुतस्य धाम्न" इत्यादौ वक्ता वेदर्षिः स्वयमेव स्तौति स्वम् 'अहं मारुतधामज्ञानवा'' निति। एवं चात्मन एवोपदेशः प्रख्यापनमितियावत् , प्राणशब्देन प्रावोचि न ब्रह्मण इति चेदुच्यते तर्हीदमुत्तरम्–, अध्यात्मसम्बन्धभूमा ह्यस्मिन्—अस्मिन्मन्त्रेस्मिन्प्रकरणे चाध्यात्मसम्बन्धस्यैव भूमा बाहुल्यं विद्यते नोपदेष्टुः कस्याप्यृषेरन्यस्य वा कस्यचिदिति ॥१।१।३०॥

अन्यदपि समाधानं रचयति—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥१।१।३१॥

शास्त्रस्य दृष्टिः शास्त्रदृष्टिस्तया। शास्त्रदृष्टिर्नामोपदेश्योपदेष्टृभावकल्पनम्। वेदातिरिक्तेषु शास्त्रेषु व्यासकालीनेषूपदेश्यभाव उपदेष्टृभावश्च दृष्टौ भवतः। एवं वेदेष्वपि कल्पनोभयोरुपदेश्योपदेष्टृत्वयोरवगन्तव्या। तत्र दृष्टान्तमाह—वामदेववत्। यथा भक्तेषु प्रह्लादो ध्रुवश्च सर्वत्रैवोपतिष्ठाते एवं वेदान्तेषु प्रायेण सर्वत्र वामदेव उपतिष्ठते। वामदेवो मुक्तो वामदेवो न मुक्त इतिवत्। वामदेवोपदेशस्तु वेदे। तथा हि "त्रिरस्य ता परमा सन्ति सत्या स्पार्हा देवस्य जनिमान्यग्नेः। अनन्ते अन्तः परिवीत आगाच्छुचिः शुक्रो अर्यो रोरुचानः॥" (ऋ०४।१।७) इत्यत्र यथा वामदेवः कञ्चिच्छिष्यं प्रकल्प्याग्निं स्तौति तथैव तत्र तत्रर्षिरुपदिशति प्रकल्पिताञ्छिष्यानिति॥ ॥१।१।३२॥

अपरां शङ्कामुन्मूलयति—

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥१।१।३२॥

इति श्रीमद्राममन्त्राचार्यैः श्रीमद्व्यासमहर्षिभिः
प्रणीते वेदान्तदर्शने प्रथमाध्याये
प्रथमः पादः

उपरिनिर्दिष्टासु सर्वासु श्रुतिषु जीवलिङ्गं मुख्यप्राणलिङ्गं च दृश्यते। येन लिङ्गेन चिह्नेनोपवर्णनेन निर्विघ्नं जीवग्रहणं भवति तज्जीवलिङ्गमित्युच्यते। येन च लिङ्गेन मुख्यप्राणस्य लोकप्रसिद्धिमुपगतस्य निरुपद्रवं ग्रहणं भवति तन्मुख्यप्राणलिङ्गमित्युच्यते। तथा च जीवस्यैव मुख्यप्राणस्यैव वा ग्रहणमस्तु मास्तु च परस्य ब्रह्मणोथवा त्रयाणामप्यस्तु ग्रहणमिति चेन्न। कुतः? उपासात्रैविध्यात्। उपासोपासना। तस्यास्त्रैविध्यमुपासात्रैविध्यं तस्मात्। यदि जीवस्यैव ग्रहणं स्यात्केवलस्य तर्हि प्राणस्य कथं न? तस्यापि लिङ्गप्रतीतेः। यद्युभयोरेवागत्या ग्रहणं तर्हि परब्रह्मणोपि कथं न? तस्यापि लिङ्गप्रतीतेः। यदि त्रयाणामेव ग्रहणमिति पक्षः कुक्षौ क्रियते तर्ह्युपासात्रैविध्यरूपो दोषः प्रसज्येत। जीवस्याप्युपासनं प्राणस्यापि लौकिकस्य ब्रह्मणश्चापि परस्य। न हि वेदेषु जीवोपासनया प्राणाद्यचिदुपासनया वा श्रेयस्समधिगतिः प्रतिपादिता। अवशिष्टं तु सूत्रं व्याख्येयम्। आश्रितत्वादिति। अन्यासु च श्रुतिषु प्राणशब्देन ब्रह्मण आश्रयणात्। कास्ताः श्रुतयः? श्रूयन्ताम्। "[1]यो अस्य विश्वजन्मन ईशे विश्वस्य चेष्टतः। अन्येषु क्षिप्रधन्वने तस्मै प्राण नमोऽस्तु ते॥" (अथ० ११।४।

---

(१) यः (प्राणः परमात्मा) विश्वजन्मनो विश्वात् परमात्मनो जन्म यस्य तस्य चेष्टतः व्यापारं कुर्वतोस्य विश्वस्य जगत ईशे ईष्टे, अन्येषु तद्भक्तभिन्नेषु तद्भक्तद्रुक्ष्वित्यर्थः, क्षिप्रधन्वने क्षिप्रं दण्डप्रदानोद्यताय हे प्राण तस्मै ते तुभ्यं नमोस्तु।

२३) [1]"यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः। एवा तस्मै बलिं हरान् यस्त्वा शृणवत्सुश्रवः ॥ (अथ० ११।४।१९) "प्राणाय स्वाहा" (शु०य०२३।१८) "प्राणो वा अमृतम्" (शत०  ) इत्यादयः। तद्योगादिति। तेन योगस्तद्योगतस्मात्। योगः सम्बन्धः। ब्रह्मणा सहैव सम्बन्धस्तत्तच्छ्रुतिषु दृश्यते न लौकिकप्राणेन सहेति ॥१।१।३२॥ इति प्राणाधिकरणम् ॥११॥

इति सर्वतन्त्रस्वतन्त्र–परमहंसपरिव्राजक–स्वामिश्रीभगवदाचार्यमहाराजप्रणीते वेदान्तदर्शनवैदिकभाष्ये प्रथमेऽध्याये प्रथमः पादः।

## प्रथमेऽध्याये द्वितीयः पादः

ध्यायं ध्यायं तमोहन्त्रीं सर्वविद्याप्रकाशिनीम्।
पादुकां गुरुपादानां लीनामि ब्रह्मचिन्तने ॥१॥

( सर्वत्र प्रसिद्ध्यधिकरणम् ॥१॥ )

पूर्वस्मिपादे व्यासार्यपादा ब्रह्मस्वरूपं विवृत्य वेदेषु तत्तत्प्रकरणेषु प्रयुक्तानां लोकप्रसिद्धानां प्राणादिशब्दानामपि ब्रह्माभिधायकत्वं सबलं समर्थ्यापि्यतृप्ता इवास्मिन्द्वितीयस्मिन्नपि पादे ब्रह्मस्वरूपसमर्थनाय प्रयतमाना आहुः—

**सर्वत्र प्रसिद्धोपदेशात् ॥१।२।१॥**

अत्र प्रख्यातपर्यायः प्रसिद्धशब्दो नेति वयम्। प्रकर्षेण

(१) हे प्राण परमात्मन्, यथा इमाः सर्वाः प्रजास्तुभ्यं बलिहृतः सन्ति, एवा एवं तस्मै बलिं हरान् त्वं जीवनसामग्रीं हर प्रापय यस्त्वा त्वां शृणवच्छृणोति त्वदाज्ञां पालयति हे सुश्रवः यशस्विन्!

सिद्धः प्रसिद्ध इत्यर्थकोयं शब्दः। सिद्धत्वं च कथञ्चिदपकर्ष-राहित्यम् । तत्र प्राकर्ष्यं च सातत्यरूपम् । यत्र सातत्येनापकर्षराहित्यं तत्प्रसिद्धपदाभिलप्यम् । तादृशं तु ब्रह्मैव । एवं च सर्वत्र वेदेषूपासनादिप्रकरणेषु प्रयुक्तैस्तैस्तैः शब्दैर्लोकरूढार्थं परित्यज्य ब्रह्मरूपोर्थ एव ग्रहीतव्यः । कुतः ? प्रसिद्धोपदेशात् । तत्तत्स्थलेषु सातत्येनापकर्षरहितस्य ब्रह्मण एवोपदेशात् । तत्रोदाहरणं यथा—"इन्द्रासोमा तपतं रक्ष उब्जतं न्यर्पयतं वृषणा तमोवृधः । परा शृणीतमचितो न्योषतं हतं नुदेथां नि शिशीतमत्रिणः ॥" (अथ०८।४।१) इतिमन्त्रे पठितयोरिन्द्रसोमयोर्न लोकप्रसिद्ध इन्द्रः सोमश्चार्थः किन्तु ब्रह्मैव। इन्द्रे सोमे च लोकालोकावगते नास्त्येव सातत्येनापकर्षराहित्यमिति न तिरोहितम् । अन्येपि पूर्वमुपपादिताः प्राणादिशब्दा अपि स्मर्तव्या एवात्र । प्रख्यातार्थकप्रसिद्धशब्दग्रहणे तु प्रसिद्धाप्रसिद्धयोः प्रसिद्धस्यैव ग्रहणस्य न्याय्यतया प्रसिद्धानां प्राणाकाशादीनामिन्द्रसोमादीनां च जडानामेवोपास्यत्वं प्राप्येत विरुध्येत च तल्लोकादपि वेदाच्चापि ॥१।२।१॥

सर्वत्र द्व्यर्थकबह्वर्थकशब्दैः प्रसिद्धार्थत्यागपुरस्सरं नित्य-

(१) वृषणा वृषणौ बलवन्ताविन्द्रसोमौ, रक्षस्तपतं तापयतमुब्जतमार्जवोपेतं च कुरुतम् । तमोवृधोऽज्ञानमानवर्धकान्न्यर्पयतं नितरामपसारयतम् । अचितश्चिद्रहितानविवेकनः क्रूरान् परा शृणीतं सर्वथा नाशयतम् । नि ओषतं दहतं हतं निष्प्राणान् विधत्तम् । अत्रिणो निरपराधजीवभक्षकान्नुदेथां नुदतं नि शिशीतं च निर्बलान्कुरुतम् । धर्मभेदादेकस्यैव परमात्मन इन्द्रशब्देन सोमशब्देन च सम्बोधनम् । धर्मभेदधियैव द्विवचनसमासोपपत्तिः ।

सिद्धब्रह्मग्रहणेपरमपि हेतुमाह—

## विवक्षितगुणोपपत्तेश्च ॥१।२।२॥

वक्तुमिष्टा विवक्षिताः। विवक्षिताश्च ते गुणाश्चेति विवक्षितगुणास्तेषामुपपत्तिः। सिद्धिस्ततः। चः समुच्चये। विवक्षितानां गुणानां ब्रह्मण्येवोपपत्तिर्भवति नान्यत्र। के खलु विवक्षिता गुणाः? उच्यन्ते। "इन्द्रसोमा तपताम्" इत्यादिमन्त्रे रक्षसां दुष्टकर्मणां दुर्हृदयानां च हननं नाशनं पराभवः प्रणोदो निर्बलीकरणमन्यत्र च ब्रह्मधर्मतापत्तिर्विशुद्धमनोग्राह्यत्वप्राणधारकत्वज्योतिस्स्वरूपत्वसत्यसङ्कल्पत्वादयो बहवः सन्ति विवक्षिता गुणाः। एतेषां ब्रह्मण्येवोपपत्तेः सर्वत्र तस्यैव ग्रहणं कर्तव्यम् ॥ ॥१।२।२॥

ननु जीवेपि मनोमात्रग्राह्यत्वं तत्स्थितौ प्राणस्थितिरिति-प्राणधारकत्वमित्यादयो गुणाः संभवन्त्येव कथं न तर्हि तस्यैव तस्यापि वा ग्रहणमित्याशङ्क्याह—

## अनुपपत्तेस्तु न शारीरः ॥१।२।३॥

तुः पूर्वपक्षव्यावर्तकः। शारीरो जीवः। उपासनाप्रकरणेषु सत्यपि जीवलिङ्गे जीवो न ग्रहीतव्यः। कुतः? अनुपपत्तेरसिद्धेः। विवक्षितगुणानामित्येव। वाक्यैकदेशोपीहानुवर्तते। छान्दसीयमनुवृत्तिः। ननु नेदं छन्दः, सूत्रमिति। सत्यं सूत्रम्। सूत्राण्यपि च्छन्दोवद्भवन्ति। तथा च विवक्षितगुणानामनुपपत्तेर्न

शारीरसङ्ग्रहः। न हि सर्वशक्तिनि विभुनि ब्रह्मण्युपदिष्टा गुणा अल्पशक्तावल्पपरिमाणे च जीवे सम्भवन्ति। ननु जीवानामपि विभुतया नाल्पपरिमाणता प्राणिति तत्रेति चेद्गाढम्। विभुत्वेपि तेषां न ब्रह्मगुणागारता। वेदेषु तु न जीवविभुत्वमुपलभ्यते। विभुर्वा स्याज्जीवोविभुर्वा जीवधर्मा एव तत्र तिष्ठन्ति न ब्रह्म-धर्मा इति तु ध्येयम्।

ननु मनोमात्रग्राह्यत्वप्राणधारकत्वादिकं ब्रह्मगुणत्वेन संमतं जीवेस्त्येवेत्युक्तम्। सत्यमुक्तम्। अचार्वेव तत्। नास्ति जीवे ग्राह्यता। न केनापि करणेन कारणेन च स गृह्यते। नास्ति वेदेषु तद्ग्रहणसंवादः। अहं जीवोहं दासोहं प्रपन्न इत्यादिग्रहणं तु चिरप्रवृत्ताज्ञानशास्त्रादिसहकृतमनोव्यापारो न तु मनोमात्र-व्यापारः। स्वार्थायैव चैतद्ग्रहणं न परार्थम्। ब्रह्मण्यवस्थिता ग्राह्यता तु न ब्रह्मार्था परार्थैव। ब्रह्मविद्ब्रह्मैव भवतीति ब्रह्म-ग्रहणफलम्। ग्रहणं ज्ञानमेव। एवं प्राणधारकत्वं च जीवस्य पूर्वजन्मकर्मकलापायत्तं न स्वातन्त्र्येण। ब्रह्मणि तु सर्वं स्वात-न्त्र्येणैव तत्स्वरूपतया स्थितम्। न कोपि बद्धदशामनुभवन्नस्वा-स्थ्यं च संभजञ्जीवो ज्योतिस्स्वरूपो भवितुमर्हति यदा च ज्यो-तिस्स्वरूपता तस्य, जीवता च तदा परिहृतस्वरूपा सती क्वापि विलीना भवति। जीवतीति जीवः। जीव प्राणधारणे। प्राणधारणवेलायामेव प्राणधारणवेलासंभावनायामेव वा जीवत्वव्यवहारः। अनेन शारीरोपि व्याख्यातो वेदितव्यः॥१।२।३॥

अपरमपि हेतुमाह--

## कर्मकर्तृव्यपदेशाच्च ॥१।२।४॥

"कर्तुरीप्सिततमं कर्म" "स्वतन्त्रः कर्ता" इतिपाणिनिमुनिसङ्केतिते कर्मकर्तृणी न प्राग्भवीयव्यासमहर्षिप्रयुक्ताभ्यां ताभ्यामर्थान्तरे। व्यपदेशो व्यवहारः। चः समुच्चायकः। नेति शारीर इति च पदद्वयं पूर्वसूत्रादिहाप्युपतिष्ठते। एवं च कर्मकर्तृव्यपदेशादपि तत्तत्प्रकरणेषु तत्तद्वाक्येषु शारीरो जीवो न ग्रहीतव्य इति सूत्रार्थः। अयमाशयः। "अग्ने नय सुपथा राये अस्मान्" (शु० य० ४०। १६) इत्यत्राग्न इतिसम्बोधनपदादुपस्थितयुष्मच्छब्देन व्यवहार्यं ब्रह्म कर्तृ, अस्मानित्यस्मत्पदवाच्या जीवाः कर्म। "तमीशानं जगतस्तस्थुषः पतिं धियंजिन्वमवसे हूमहे वयम्" (शु०य०२५।१८) इत्यत्र प्राप्ये ब्रह्मणि तमीशानमितिकर्मत्वमुपासकेषु च जीवेषु "वयम्" इति कर्तृत्वम्। एवं च सर्वत्रोपास्योपासकयोर्भेदप्रदर्शनायैकतरस्मिन्कर्तृत्वव्यपदेशोन्यतरस्मिंश्च कर्मत्वव्यपदेशः। नेदं बोध्यं नियमेन परब्रह्मणि प्राप्यतया कर्मत्वं प्रापकतया च जीवे कर्तृत्वमिति। उभयोरपि क्वचित्कर्मत्वं क्वचिच्च कर्तृत्वम्। जीवब्रह्मणोर्भेदप्रख्यापनार्थमेवेदं सूत्रम्। ततश्च कर्मेति कर्त्रितिच उपलक्षणरूपमन्येषामपि कारकाणाम्। तथा च "कृणोत्यस्मै वरिवो य इत्थेन्द्राय सोममुशते सुनोति" (ऋ०४।२४।६) इत्यत्रास्मा इन्द्राय वरिवो वरिवस्यां कृणोति करोतीति सम्प्रदानमुपास्ये। तेजोसि तेजो मयि धेहीत्यधिकरणसप्तम्युपासके। एवमन्या अपि विभक्तय उन्नेया

वेदेभ्यः। एवं चोपास्योपासकयोर्भेदनिश्चयेन न ब्रह्मधर्माणामुपपत्तिः शारीरे।

अत्र शारीर इत्येकवचनपाठः। अत्रायं विशयो भगवतो व्यासस्य जीवैकत्वं विवक्षितं जीवबहुत्वं वेति? कुतोयं संशयः? एकवचनपाठादेव। जातावप्येकवचनं भवति दुष्टो नोपगन्तव्य इति। वाढम्। वेदपदानुसारी हि भगवान्बादरायणः। यद्वेदा वदन्ति तदेव तस्य प्रमाणम्। "इमे जीवा वि मृतैरावद्गत्रन्०" "इमं जीवेभ्यः परिधिं दधामि" (अथ० १२।२।२२,२३) "जीवानामायुः प्रतिर" (अथ०१२।२।४५) इति बहुवचननिर्देशेन जीवबहुत्व एव वेदानां पक्षपातः। "जीवं रुदन्ति" (अथ० १४।१।४६) इत्यादिष्वेकवचननिर्देशस्तु जातिविवक्षयैव। नियते ह्येकत्वे बहुवचनमवचनं स्यात्। तथा च जीवबहुत्ववादिनैव भगवता व्यासेन भाव्यम् ॥१।२।४॥

हेत्वन्तरमाह—

## शब्दविशेषात् ॥१।२।५॥

चकारोध्याहार्यः। शब्दविशेषादित्यस्य विभक्तिविशेषादित्यर्थः। न हि सर्वत्रोपास्योपासकयोः कर्मकर्तृविभक्ती एव भवतः। अन्या अपि विभक्तयः संभवन्ति। सूपपादितमेतदव्यवहितपूर्वसूत्र इति ग्रन्थविस्तरभयाद्विरमामः ॥१।२।५॥

हेत्वन्तरमाह—

## स्मृतेश्च ॥१।२।६॥

स्मृतिशब्देन नात्र भगवद्गीता ग्रहीतव्या। भगवता व्यासे–

नैव सा संगृहीता। न हि कोप्यभियुक्तः स्वपक्षं रक्षितुं स्वस्यैव वचनान्तरं प्रामाण्येनोपस्थापयितुमर्हः। यद्यभियुक्तवचनमेव तद्वक्तव्यसमर्थने प्रमाणं स्यात्तर्हि किमर्थो वचनान्तरगवेषणाश्रमः? पूर्ववचनेनैव सर्वं समीहितं सम्पत्स्येत। ननु भवतु नाम भगवद्गीतासंग्राहको भगवान्व्यासः, तन्निहितसमीहितहिततत्त्वं तु भगवतो वासुदेवस्यैव। तथा च वासुदेवोपदिष्टसिद्धान्तरूपाया गीतायाः स्मृतित्वेन ग्रहणे का खल्वसूया भवताम्? ओम्। अस्त्येवात्रास्माकमसूया। प्रत्येकमक्षरं श्रीकृष्णोक्तमेव तत्र संनिहितमिति शपथशतपथमन्तरेण प्रकारेण केनान्येन निर्णेयम्? अतो भगवतो बादरायणात्पूर्वभवस्य मनोः स्मृतिरेवात्रोदाहर्तव्येति युक्तमुत्पश्यामः। तथाहि, "यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम्। तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते॥" (मनु० १।११) इत्यादिः। यदि नेयं स्मृती रचिता मनुना किन्तु भृगुणेति मतं, मृग्यमन्यत्स्मृतिप्रमाणम्। कल्पग्रन्थानामपि स्मृतित्वमेव। प्रथमोपदेशः श्रुतिः। श्रुतिं श्रुत्यर्थं चानुस्मृत्य प्रणीतान्यन्यानि शास्त्राणि व्याससमयस्थितानि व्यासपूर्वजकृतानि च सर्वाण्येव स्मृतिशब्देनात्र ग्रहीतव्यानि॥१।२।६॥

ननु "पञ्चस्वन्तःपुरुष आ विवेश" (शु०य०२३।५२) "अत्यतिष्ठद्दशाङ्गुलम्" (शु०य० ३१।१) "एको ह देवो मनसि प्रविष्टः प्रथमो जातः स उ गर्भे अन्तः।" (अथ०१०।८।२८) इत्यादिषु संहितावचनेषु पुरुषस्याल्पदेशत्वबोधनेनाणुपरिमाणवतो जीवस्यैव पूर्वोक्तेषु प्रदेशेषु ग्रहणं न ब्रह्मण इत्याशङ्क्याह—

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥१।२।७॥**

अर्भकोल्पः। "अर्तिगृभ्यां भन्" (उणादिसू०४३२) इत्यनेन जौहोत्यादिकाद् ऋ गतावित्यस्माद्धातोर्भन्प्रत्ययः। संज्ञायां च कन्। अथवा "अर्भकपृथुकपाका वयसि" (उणा०७३२) इत्यनेन ऋधु वृद्धावित्यस्माद्वुन्। अकादेशः। धकारस्य भकारः। लघूपधगुणश्च। यद्यपि पोतः पाकोर्भको डिम्भ इत्यमरादर्भकशब्दः शिशुमात्रं कथयति तथापि लक्षणया "अर्भकः कथितो बाले मूर्खेपि च कृशेपि च" इतिमेदिनीबलाद्वात्रार्भकशब्दस्याल्पार्थकत्वं सुवचम्। अथवा मा भूल्लक्षणा मा च भूदापरकालिककोषसाहाय्यम्। मूत्रप्रयोगबलाज्ज्ञायते तदानीमर्भकशब्दस्याल्पार्थकत्वमासीदिति। अर्भकोल्प ओकोवकाशो यस्य तदर्भकौकास्तत्त्वं तस्मादर्भकौकस्त्वादल्पप्रदेशत्वादित्यर्थः। अल्पशक्तित्वादितितात्पर्यार्थः। तद्व्यपदेशाच्च=अल्पशक्तित्वव्यपदेशाच्च। वेदे सर्वत्रैव जीवा अल्पशक्तित्वेनोपवर्णिताः। तथा हि, [1]"यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते।" (अथ०२०।३४।९)[2]भूरि त इन्द्र वीर्यं तव स्मस्यस्य स्तोतुर्मघ-

---

(१) यस्माद्दते जनासो जना न विजयन्ते युध्यमानाश्चावसे आत्मानमवितुं यं हवन्त आह्वयन्ति।

(२) हे इन्द्र ते तव वीर्यं भूरि महदस्ति। तव स्मसि वयं तवैव स्मः। हे मघवन् सर्वधनस्वामिन्, अस्य स्तोतुः काममभिलाषमा पृण सर्वथा पूरय।

वन्काममा पृण।" (अथ०२०।१५।५) [1]"एको देवत्रा दयसे हि मर्तान्" (अथ०२०।१२।५) [2]"प्रमदा मर्त्यान्प्र युनक्षि धीरः।" (अथ०१९।५६।१) [3]"यन्मे छिद्रं मनसो यच्च वाचः" (अथ०१९।४०।१)[4]" मा नो मेधां मा नो दीक्षां मा नो हिंसिष्टं यत्तपः"(अथ०१९।४०।३) इत्यादिषु सर्वत्रैवाल्पशक्तित्वं जीवानामभिद्योतितम्। एवं चार्भकौकस्त्वात्तद्व्यपदेशाच्च जीवस्यैव ग्रहणं कर्तव्यमित्याशङ्कासि चेत् । न। निचाय्यत्वात् , एवं (व्यपदेशः) निचाय्यत्वेन दशाङ्गुलपरिमाणके हृदयप्रदेशे ज्ञेयत्वेनोपास्यत्वेन वा, एवम्=अत्यतिष्ठद्दशाङ्गुलमित्युपदेशो न त्वल्पशक्तित्वव्यपदेशार्थो नो वाणुत्वव्यपदेशार्थः। अणुत्वं व्यपोहितुं स्वयमाह सूत्रकारः—व्योमवच्चेति। व्योमास्त्यस्मिन्निति व्योमवत्। तद्ब्रह्म यत्र्यल्पमणु वा स्याद्व्योमवन्न स्यात्। व्योम्नो बहुप्रदेशव्यापित्वाद्ब्रह्मणश्चाल्पप्रदेशत्वाद्व्योम्नः श्रुत्युक्तमाधारत्वं ब्रह्मणि न युज्येत । व्योमवदित्यत्राधारवाचको हि मतुप्। "[5]अन्तरिक्षमुतोदरम्"(अथ०१०।७।३२) इत्यत्रान्तरिक्षमाकाशस्तस्योदरत्वेन निरदेशि। सर्वापेक्षया सूक्ष्मं व्यापकं च भौतिकं तत्त्वमाकाश एव। सोपि यस्योदरीभूतस्तस्य व्यापकत्वस्य का नाम कथा? अथवा व्योमवदित्यस्य व्योमेवेत्यर्थः। यथा व्योम व्यापकं तथैव ब्रह्मापि। अथवा व्योम्नो व्यापकत्वेपि घटा-

---

(१) देवत्रा भक्त्यधीनो भक्तत्राणकर्ता वा त्वमेक एकाक्येव मर्त्यान् मनुष्याणां दयसे।

(२) धीरस्त्वं मर्त्यान्मरणधर्मणो मनुष्यान्प्रमदा प्रकृष्टेनानन्देन युनक्षि संगमयसि।

(३, ४, ५) निगदव्याख्याताः।

काशमठाकाशेत्यादिव्यपदेशवद्ब्रह्मणो व्योमादिनिखिलपदार्थव्यापकत्वेप्युपासनार्थमेवाल्पप्रदेशत्वव्यपदेशः । ब्रह्मणो निचाय्यत्वं च वेदेषु प्रतिपादितम् । तथा हि, [1]"वैश्वानरं मनसाग्निं निचाय्या हविष्मन्तो अनुषत्यं स्वर्विदम् । सुदानुं देवं रथिरं वसूयवो गीर्भी रण्वं कुशिकासो हवामहे ॥" (ऋ० ३।२६।१) इति ॥१।२।७॥

ननु हृदयादिदेहप्रदेशेष्ववस्थितस्य ब्रह्मणो जीवस्येव सुखदुःखादिसम्भोगप्राप्तिरपि संभाव्येतेत्याशङ्क्याह—

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ।१।२।८॥

वैशेष्यं विशेषः । स्वार्थे ष्यञ् । जीवब्रह्मणोर्विद्यते हि विशेषः । तेन सुखदुःखादिसम्भोगानां प्राप्तिर्जीवस्येव ब्रह्मणो न भवति । कीदृशोसौ विशेषः ? उच्यते । जीवः सुखदुःखादिहेतुभूतशुभाशुभकर्मकर्ता ब्रह्म च सुखदुःखादिविलासप्रतिभासानवभासितम् । एवं च नान्तर्वर्तितया किन्तु शुभाशुभकर्मकर्तृतया तात्कर्मकर्त्रभिमानितया वा सुखदुःखादिसम्भोगाधिगतिमान्भवति जीवः । नैकस्मिन्नगरे नगरैकदेशे वा समानागारे वा निवासमात्रेण सर्वेषां सुखं वा दुःखं वा निर्विशेषेण भवति । भवति च तत्र कस्यचित्सुखं सुखाभावश्च कस्यचित् । तत्रैव निवसतां ज्ञानिनां

---

(१) अस्य मन्त्रस्याग्निर्देवता । हे अग्ने हविष्मन्तो वसूयवो धनाभिलाषिणो वयं कुशिकासः कुशिकगोत्रोत्पन्ना अनुषत्यं सत्यस्वरूपं स्वर्विदं सुखवेत्तारं सुखस्वरूपं वा सुदानुं मोक्षदातारं रथिरं रमयितारं रण्वं सर्वगं वैश्वानरं सर्वहितैषिणं देवमग्निं प्रकाशस्वरूपं मनसा चेतसा निचाय्य विदित्वा हवामहे ।

विवेकिनां वा निर्दग्धकर्मफलबीजानां न भवति सुखदुःखाद्यनुभवः । एवं शरीरे जीवेन सहैवावतिष्ठमानस्यापि ब्रह्मणो न सुखदुःखसम्भोगरोगसंयोगः । तथा च श्रुतिः [1]"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥" (ऋ०१।१६४।२०; अथ०।९।९।२०) । व्याख्यातार्थोऽयं मन्त्रष्टिप्पण्यां विस्तरेण पूर्वम् ॥१।२।८॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥१॥

( अथात्त्रधिकरणम् ॥२॥ )

"महान्वै भद्रो यभ मामद्ध्यौदनम्" (अथ०२०।१३६।१३) इत्यत्रान्यत्र चादनप्रसङ्गोपसञ्जनात्कोऽत्तेतिविनिर्णयार्थमाहाचार्यः—

## अत्ता चराचरग्रहणात् ॥१।२।९॥

तदेव ब्रह्म स एव परमात्माऽत्तेत्यप्युच्यते । अत्ता भक्षणक्रियाकर्ता । प्रलयकर्त्तेति यावत् । चराचरस्वरूपं निखिलं जगत्तस्मिन्नेव श्रान्तं श्रान्तं विश्राम्यति । स्वान्तःस्थापयितृत्वमेवात्रात्तृत्वं ब्रह्मणः । अन्तःस्थापनं च न हि लोक इव किञ्चित्कुतश्चिद्गृहीत्वान्यत्र रक्षणम्, किन्तु कारणे ब्रह्मणि कार्यविलयः । तथैव श्रुतिः । तथाहि, "वेनस्तत्पश्यत्परमं गुहा यद्यत्र विश्वं भवत्येकरूपम् ॥" (अथ०२।१।१) "तत्सम्भूय भवत्येकमेव" (अथ०१०।८।११) "विश्वं भवत्येकनीडम्" (शु०य०३२।८)

---

(१) व्याख्यातः ।

इत्येतेषु मन्त्रेषूपवर्णितैकनीडता वा प्रलय एव। नन्वनलोपि कथं नात्ता भवतु? श्रुतौ तस्याप्यत्तृत्वेन श्रवणात्। तथाहि, "यो नो द्वेष्टि तमद्धयग्ने" (अथ०१२।२।३)। अस्त्येव सोप्यत्ता। को निवारयति तस्यात्तृत्वम्? तृणात्ता हि स न तु चराचरात्ता। अत्र तु चराचरात्तृत्वं श्रूयते तेन ब्रह्मण एव ग्रहणं नानलस्य। ननु "यो नो द्वेष्टि तमद्धी"तिकथनेन लौकिकाग्निरपि चराचरात्तैवेति चेत्, भ्रान्तोसि। तत्र श्रुतोग्निशब्दो न लौकिकमग्निं बोधयति, परमात्मानमेव। सामर्थ्यात्। मा भूदनलस्य ग्रहणं जीवस्य कुतो नात्तृत्वेन ग्रहणम्? श्रूयते हि तस्यात्तृत्वं "तयोरन्यः पिप्पलं स्वाद्वत्ती"त्यत्र। जीवस्यापि न ग्रहणम्। स हि पिप्पलं स्वाद्वत्ति केवलं न तु चराचरम्। पिप्पलं तु कर्मफलानुकूलभोगः। किं च जीवो वृक्षस्य पिप्पलमत्ति न तु वृक्षमेव। चराचरस्वरूपो हि वृक्षः। स एव संसारः। न हि जीवश्चराचरयोः संहारकर्मणि शक्तिं समाहरति। अल्पशक्तिर्हि स इत्यसकृदवोचाम। ननु ब्रह्मण्यपि न विद्यते संहारशक्तिः। तथैव कठोपनिषदि श्रूयते। "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः" इति। अत्र ब्रह्म च क्षत्रं चेति पृथक्कृत्य ग्रहणेनैवोभयत्वस्य लाभात्पुनरुभे इति ग्रहणादुभये ब्राह्मणक्षत्रिया एव तस्यौदनतां भजन्ते। तयोरेव सोत्ता भवति नान्येषामितिगम्यते। न गम्यत एतत्। भ्रान्तोसि भासमानेपि भास्वति पथि। न खलु दृश्यन्ते लोके मुखजा बाहुजाश्चैव परासवो भवन्तो न वा दृश्यन्तेजरामरां वा नावमधिरूढा ऊरुजाः पादजा वा। सर्वे हि स्वक-

र्मफलभोगावसाने चरमां गतिमाचुम्बन्त्येव । एवमचरा अपि काले कालेपक्षयतां पक्षयन्त एव वीक्ष्यन्ते । न प्रत्यक्षतोनुभूयमानमपलपितुं शक्यं भवति वस्तु । एवं च ब्रह्मक्षत्रयोः कठश्रुतावुपादानमवशिष्टानामकलनीयमहाकालचक्रचङ्क्रमणेन पिष्यमाणानां विश्वेषां चराचराणामुपलक्षणार्थं मन्तव्यम् । श्रुतिरप्यत्र भवति "अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाभिः[2] । यो मा ददाति स इदेवमावा[3] अहमन्नमन्नमदन्तमद्मि ॥" (साम०५९४) । अस्यामृचि सर्वेषामेवान्नमदतां मुखबाहूरुपादजातानां खगोरगमृगादीनां कीटपतङ्गानां च केवलं तद्ब्रह्मैवात्ता भवति नान्य इति स्पष्टतरम् । चराचरेत्यत्र चरशब्देन नात्मग्रहणं वेदितव्यम् । नात्मादनीयो भवति । नित्यो हि सः । केवलं गमनादिक्रियाः कुर्वाणाश्चरशब्दवाच्या अत्र वेदितव्याः ।

ननु किमर्थमिदमुच्यत "अत्ता चराचरग्रहणात्" इति ? "जन्माद्यस्य यतः" इति सूत्रेणैवात्र प्रतिपाद्यार्थस्य गतार्थत्वात् ।

---

(१) अहं परमात्मा ऋतस्य सत्यस्यास्तित्वमतो जगतः प्रथमजा प्रथमोत्पन्नोस्मि । देवेभ्यः प्राणिभ्यः पूर्वं प्रथमजातोस्मि । अमृतस्य मोक्षस्य नाभिः केन्द्रमस्मि । यस्तत्त्वज्ञो मा मां जिज्ञासुभ्यो ददाति स इत् एव आवा रक्षकः । अहं सर्वेषामन्नमस्मि । अद्यत इत्यन्नम् । ज्ञानिभिरहमद्य इव स्वपोषणार्थम् । मादृशमन्नं सर्वशोकनिवर्तकमदन्तं सेवमानं ध्यायन्तं वा ज्ञानिनमद्मि स्वान्तलीनं करोमि ।

(२) नामेतिपाठान्तरम् ।

(३) मावा दहम० इतिपाठान्तरम् ।

सत्यम् । उक्तमेवार्थं स्मरत्यत्राचार्यः शब्दान्तरसन्निधानेन । अत्तृत्वश्रवणेन भविष्यन्तं भ्रमावतारमपाकर्तुमेवायमुद्योगः ॥ ॥१।२।९॥

किमविशेषेण सर्वत्रैव वेदेऽत्तृशब्दो ब्रह्मपरक एवेत्यत आह—

**प्रकरणाच्च ॥१।२।१०॥**

प्रकरणं प्रस्तुतः प्रसङ्गः । चकार एवकारार्थः । प्रस्तुतप्रसङ्गादेव निर्णीयते कुत्रादनकर्मणि ब्रह्म ग्रहीतव्यं कुत्र वा जीवः । "पिप्पलमत्ती"ति न ब्रह्मणो ग्रहणं प्रकरणात् । तयोरन्यः पिप्पलं स्वाद्वत्तीत्यादौ पठितेनान्यशब्देन जीव एव सन्निधाप्यते न ब्रह्म । [1]"यदन्नमद्मि बहुधा विरूपं हिरण्यमश्वमुत गामजामविम् । यदेव किं च प्रतिजग्रहाहमग्निष्टद्धोता सुहुतं कृणोतु" (अथ० ६।७१।१) यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत संगृणामि" (अथ० ६।७१।२) इत्यादिष्वपि जीव एवात्ता न ब्रह्म। प्रकरणादेव । [2]"उक्ष्णो हि मे पञ्चदश साकं पचन्ति विंशतिम् ।

(१) अहं ब्रह्मर्षिर्बहुधा विरूपमग्राह्यं यदन्नमद्मि यदेव च हिरण्यं सुवर्णादिकमश्वं गाम् अजाम् अविं च प्रति जग्रह प्रत्यगृह्णाम् प्रतिगृह्णामि वा तत्सर्वं होताग्निः सुहुतं सुजग्धं सुगृहीतं च कृणोतु करोतु ।

(२) उक्ष्ण उक्षाणो भक्तिरसेन तृप्तिकर्तारो भक्ता मे मदर्थं पञ्चदश पञ्च प्राणान् पञ्च ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च पञ्च पचन्ति नियमयन्ति, विंशतिमुपर्युक्तानि पञ्चदशान्तःकरणचतुष्टयं प्रथमं स्पन्दनं चान्तःकरणचतुष्टयस्य पचन्ति नियमयन्ति; साकं सहैव पञ्चदश विंशतिं च अग्निरादित्यश्चन्द्रमाः पवमान आपः पशवः प्रजा इति सप्त प्राणान् पौर्णमास्यष्टकामावास्या श्रद्धा दीक्षा यज्ञो दक्षिणाश्चेति सप्तापानान् भूमिरन्तरिक्षं द्यौर्नक्षत्राण्यृतव आर्तवाः

उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे विश्वस्मादिन्द्र उत्तरः॥ "(ऋ०१०।८६।१४) इत्यस्मिन्मन्त्रेत्ता परमात्मैव न जीवः। इन्द्रत्वं विश्वस्मादुत्तरत्वं च न ब्रह्मण ऋतेन्यत्र कुत्रापि संगच्छते। वेदानुसारिणी हीयं ब्रह्मविवेचना। वेदेषु समागतानां ब्रह्मबोधकपदानामर्थनिर्णयस्यावश्यकत्वात्प्रस्तावादत्तृशब्दविचारो नाचारोल्लङ्घनम् ॥१।२।१०॥ इत्यत्त्रधिकरणम् ॥२॥

(अथ गुहाप्रविष्टाधिकरणम् ॥३॥)

तच्च ब्रह्म सर्वथा निगूढं विद्यत इत्याह—

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥१।२।११॥

आत्मानौ जीवपरमात्मानौ गुहां प्रविश्य स्थितौ। हि यतः। तद्दर्शनात्—तस्य=प्रवेशस्य दर्शनं तद्दर्शनम्। तस्मात्। दर्शनमनुभवः। उभयोर्गुहाप्रवेशस्यानुभवो भवति तदनुभूतिभूतिचित्तानाम्। ननु प्रकृतं हि ब्रह्म। अतो ब्रह्मजिज्ञासेतिप्रतिज्ञानात्। तच्चैकम्। कथं तर्हि गुहां प्रविष्टावात्मानाविति द्विवच-नदर्शनम्? उच्यते। आत्मा हि द्विधा। जीवात्मा परमात्मा

---

संवत्सर इति सप्त व्यानानथर्ववेदोक्तान् (अथ०१५।१५।१७) पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि चत्वारि चान्तःकरणानीति पचन्ति नियमयन्ति; अनासक्ताः सन्तो यथायोग्यमुपयुञ्जन्ति। तानहमद्मि लक्षणया स्वस्मिन्स्थापयामि। पीव इत् स्थूल एव तेन भवामि तृप्यामीतिभावः। हि यतः उभा इत् उभावेव मे मम कुक्षी कुक्षेर्दक्षिणवामपार्श्वौ ते पृणन्ति सर्वथा सन्तोषयन्तीति तात्पर्यम्। तव तर्पणेन को लाभ इति चेत्, अहमिन्द्रः परमैश्वर्यसम्पन्नः सर्वस्मादुत्तर उत्कृष्टः।

चेति । उभयोरात्मत्वं समानम् । अत सातत्यगमने । सततमततीत्यात्मा । व्यापकत्वेन परमात्मनो गतेः सातत्यम् । शरीराच्छरीरान्तरं समये समये गच्छतो जीवस्यापि सातत्यगमनं नातङ्कप्रयोजकम् । परमात्मा सततं सकलं व्याप्नोतीत्यात्मेत्यभिधानं भजते । जीवश्च सततमेकस्माच्छरीरादन्यद्व्रजतीत्यतः सोपि भजत्येवात्मेत्यभिधानम् । तिष्ठतु तावदेतत् । अन्यत्पृच्छामि । कामं पृच्छ । ब्रह्मविचारावसरे जीवविचारस्य किं प्रयोजनम् ? ब्रह्मविचारस्तु मुक्तिमुक्ताव्यक्तये भवतीति वेदवचनैर्व्यक्तं तमेव विदित्वाति मृत्युमेतीति । न जीवविचारफलं वेदेषु प्रदर्शितम् । कथमननुशिष्टमप्रतिज्ञातं चेहानवसरे प्रस्तुतम् ? वाढं पृष्टम् । गृह्यतां प्रतिवचनम् । जिज्ञास्यं हि ब्रह्मेति तु त्वयाप्यूरीक्रियते । जिज्ञासुश्च क इत्यन्वेष्टव्यम् । न हि जिज्ञासुनान्तरेण जिज्ञास्यमन्तरा जिज्ञासा प्रवर्तितुं शक्नोति । जिज्ञासोः स्वरूपनिरूपणायोभयोर्जीवब्रह्मणोः सामानाधिकरण्यप्रतिपादनाय स्पष्टतो जीवब्रह्मभेदप्रतिपत्तये च जीवात्मविचारोपि प्रस्तुतः । उभयोर्गुहाप्रविष्टत्वं चानुभवाद्वेदोपदेशाच्च दृश्यते प्रतीयते । गुहां प्रविष्टाविति वचनादेव श्रीमद्भगवद्व्यासदेवानुभवप्रकाशः । वेदवचनानि तु संगृह्यन्ते । [१]"पूषा राजानमाघृणिरपगूढं गुहा हितम् । अविन्दच्चित्रबर्हि-

---

(१) आघृणिर्द्युतिमान्पूषा पोषणकर्ता सन्मार्गे स्थित्वात्मोद्धारपरायणो जीवो गुहा गुहायामग्रावध्यप्राप्तत्वादतिगूढे प्रदेश उपगूढं प्रच्छन्नं हितं हितकरं चित्रबर्हिषं सर्वविलक्षणं राजानं राजमानं परमात्मानमविन्दत् प्राप्नोति ।

षम् ॥" (ऋ० १।२३।१४) [1]"य ईं चिकेत गुहा भवन्तम्" (ऋ० १।६७।७) [2]"अविन्दद्दिवो निहितं गुहा निधिम्" (ऋ० १।१३०।३) [3]"अभिनक्षन्तो अभि ये तमानशुर्निधिं पणीनां परमं गुहा हितम्। ते विद्वांसः प्रतिचक्ष्यानृता पुनर्यत उ आयन् तदुदीयुराविशम् ॥" (ऋ० २।२४।६) इत्यादिभिर्ऋग्भिर्ब्रह्मणो गुहाप्रवेशो निरूपितः। [4]"गुहा चरन्तं सखिभिः शिवेभिर्दिवो यह्वीभिर्न गुहा बभूव।" (ऋ० ३।१।९) [5]"त्वया यथा गृत्समदासो अग्ने गुहा वन्वन्त उपराँ अभि ष्युः। सुवीरासो

(१) यः कश्चिज्ज्ञानी ईम् एतं गुहा गुहायां भवन्तं स्थितिमन्तं चिकेत जानाति।

(२) गुहा गुहायां निहितं स्थापितं दिवो द्युलोकस्य निधिमविन्दत्।

(३) अभिनक्षन्तोऽन्वेषणार्थमितस्ततो भ्रमन्तो ये जीवाः पणीनां स्तोतॄणां तं परमं निधिं परमात्मानं गुहा गुहायां हितं निहितमानशुः प्राप्नुवन्ति वा। ते विद्वांसो ब्रह्म जानाना अनृता अनृतानि परिचक्ष्य ज्ञात्वा यतो यस्मात्स्थानादायन्नागच्छंस्तद् उ तदेवाविशमावेष्टुमुदीयुरुपरि गता गच्छन्ति वा।

(४) शिवेभिः शिवैः सखिभिः समानख्यातिमद्भिर्जीवैः सह यह्वीभिरन्यत्रगमनशीलाभिः कामक्रोधादिरूपाभिर्नदीभिः। करणे तृतीया। दिवोऽन्तःकरणस्य गुहायां निलयनस्थाने चरन्तं न बभूव ज्ञातुं समर्थो नाभवत्।

(५) हे अग्ने परमात्मन्, त्वया हेतुना गुहा गुहां वन्वन्तः संभजन्तो गृत्समदासो गृत्सैर्मेधाविभिः सह वासेन मद आनन्दो येषां तथा भूताः सन्तो यथा उपरान् उग्राणि पापानि अभि ष्युरभिभवेयुस्तथा कुरु। कीदृशास्ते ? सुवीरासः सुवीरा आत्मबलवन्तः सहाया येषां ते। अभिमातिषाहः कामक्रोधादीनां पराभवितारः। किं च गृणते स्तुवद्भ्यःसूरिभ्यो विद्वद्भ्यस्तत्प्रसिद्धं समृद्धिशिष्टं वयो धनं मोक्षरूपं धा धेहि।

अभिमातिषाहः स्मत्सूरिभ्यो गृणते तद्वयो धाः ॥" (ऋ०२। ४।९) ¹"येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाकः।" (ऋ०२।१२।४) इत्येताश्चर्चों जीवानां गुहानिवासं वर्णयन्ति। इदमत्राकूतम्। सन्निहितेऽत्राधिकरणे "समाने वृक्षे परि षस्वजाते" इति मन्त्रः स्मृतिपथमारोहदाचार्यस्य। समान-वृक्षावासस्मरणेन समानगुहाप्रवेशोपि स्मृतः। ततश्चेदमधिकर-णम्। प्रच्छन्नावकाशोलक्ष्यज्योतिषोलक्ष्यस्थानं वा गुहेत्युच्यते। शरीरमपि तदलक्ष्यस्थानत्वाद्गुहैव। यदेव शरीरं कर्मकर्ता कर्म-फलानुभवार्थमात्मा प्रविष्टस्तदेव सर्वसाक्षी सर्वविहारी तत्तत्क-र्मफलप्रदाता परमात्मापि प्रविष्टः। सामानाधिकरण्यमेवोभयोः। एतेन परमात्मज्ञानसौन्दर्यं विद्योतितम्। दूरस्थितं स्वसमीप-मुपस्थापयितुं महान् क्लेशो भवति। अत्यन्तिकस्थो हि परमो-पास्यदेवः परमात्मा। गुहां चरन्तं सखिभिः शिवेभिरित्युक्तं विश्वामित्रेण। गुहा हितं चित्रवर्हिषमुपगूढं राजानमाघृणिर्ज्ञा-नोद्योतद्योतितः पूषा प्राप्तपोषणो जीवः कश्चिदिति वा पूषर्षिः स्वयमेव वाविन्ददिति पूषर्षिणोक्तम्। एवं च न दूरमन्वेषणीयं हि तत्। दृष्टिनिरोधाधायिकाविद्याजवनिका केवलमपसारणीया। भासां निधिरवधिश्च द्रष्टव्यानां परमात्मा परिज्ञातो भविष्यती-तिरहस्यम्॥ "पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम्। तस्मि-

---

(१) येनेमा इमानि विश्वा विश्वानि च्यवनानि क्षरणस्वभावानि सन्ति तनि कृतानि रक्षितानि। यश्च दासमुपक्षपयितारं वर्णं प्रख्यातं जनं गुहा गुहा-यामधरं नीचैरकः अकरोत्।

न्यग्रक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः" (अथ० १०।८।४३। इत्याद्यपीह स्मर्तव्यम्।

"हि तद् दर्शनात्" इति सूत्रांशोऽन्यथापि व्याख्येयः। गुहां प्रविष्टौ तूभावेवात्मानौ। किन्तूपास्यं तु तद्धि=तदेव ब्रह्मैव न जीव इति भावः। कुतः? दर्शनात्=स्वानुभवाद्वेदानुभवाच्चेति ॥१।२।११॥

यद्यप्युभयोरेव गुहाप्रवेशः समानस्तापि ब्रह्मैवोपास्यमित्यत्र दर्शनादिति हेतुमुपन्यस्य द्वितीयमपि हेतुमुपन्यस्यति—

## विशेषणाच्च ॥१।२।१२॥

चोऽप्यर्थः। विशेषणादप्यवगम्यते समानेऽपि गुहाप्रवेश उभयोरुपास्यत्वं तु परमात्मन एवेति। किं तद्विशेषणम्? एतद्वित्। "कुमारं माता युवतिः समुब्धं गुहा विभर्ति न ददाति पित्रे। अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ॥" (ऋ० ५।२।१) इत्यत्र कुमारो जीवः। माता माया। सा च युवतिः। सबलेति यावत्। समुब्धं ताडितं निगूढं वा जीवं माया गुहायां स्वोदरेऽप्रकाशे विभर्ति पित्रे पालकाय परमात्मने च न ददातीति भावार्थः। अत्र मायया ताडितो गुहायां विधृतो ब्रह्मणे चादत्त इति विशेषणत्रयेण सन्नपि गुहानिहितः प्रतिबद्धप्रकाशो नोपास्यपदवीं प्रतिपद्यते जीवः। "अभिनक्षन्तो अभि ये तमानशुः" इत्यत्र परमात्मन एव प्राप्यत्ववर्ण-

नादुपास्यत्वमपि तस्यैव स्फुटम् । अन्यदपि विशेषणम्—¹"समानं नीडं वृषणो वसानाः सं जग्मिरे महिषा अर्वतीभिः । ऋतस्य पदं कवयो नि पान्ति गुहा नामानि दधिरे पराणि ॥" (ऋ० १०।५।२) ²"यत्रैषामग्ने जनिमानि वेत्थ गुहा सतामत्रिणां जातवेदः । तांस्त्वं ब्रह्मणा वावृधानो जह्येषां शततर्हमग्ने ॥" (अथ० १।८।४) ³"वेनस्तत्पश्यत्परमं गुहा यद्यत्र विश्वं भवत्येकरूपम् ॥" (अथ० २।१।१) इत्यत्र सर्वत्रोभयोर्गुहानिष्ठत्वं ब्रह्मणश्चैत्रोपास्यत्वं विविधैर्विशेषणैः प्रतिपादितम् ॥१।२।१२॥ इति गुहाप्रविष्टाधिकरणम् ॥३॥

(अथान्तराधिकरणम् ॥४॥)

## अन्तर उपपत्तेः ॥१।२।१३॥

अन्तरः समीपस्थ एव स परमात्मा । कुतः ? उपपत्तेः । गुहाप्रवेशवर्णनेन सर्वान्तर्गमिता ब्रह्मण उपदिष्टा पूर्वसूत्रेण ।

(१) वृषणः कर्मफलजलैरात्मनः सेक्तारः समानं नीडं जगद्रूपं वसाना आश्रयन्तोऽपि अर्वतीभिः परमात्मप्रापकमतिभिर्महिषा महान्तो विद्वांस इत्यर्थः । सं जग्मिरे संगता भवन्ति । ऋतस्य सत्यस्य ब्रह्मणः पदं कवयो विद्वांस एव नि पान्ति रक्षन्ति प्राप्नुवन्तीतिभावः । पराणि परेविद्वांस गुहा गुहायामेव नामानि नमनानि प्रह्वीभूतचित्तानि दधिरे ।

(२) हे अग्ने, यत्र गुहा गुहायामेषामत्रिणां सततगमनशीलानां सतां जनिमानि जन्मानि निवासान वा त्वं वेत्थ वेत्सि, ब्रह्मणा ज्ञानेन तान्वावृधानो वृद्धिं गमयन् एषामितस्ततोऽज्ञानगुहायां भ्रमतां शततर्हमनेकानि दुःखानि जहि विनाशय ।

(३) व्याख्यात एष मन्त्रः ।

तद्वर्णनाधिगतार्थान्तरमाहान्तर इति । अयमाशयः । त्रिविधं हि दौर्यं स्वीकृतं भवति सर्वत्र । देशकृतं कालकृतमज्ञानकृतं चेति । न देशकृतं दौर्यं परमात्मनि प्राप्तम् । सर्वव्यापकत्वेन सर्वसन्निहतत्वात् । न वा कालकृतम् । नित्यत्वात्तस्य । अवशिष्टं चाज्ञानकृतं दौर्यम् । अज्ञानमेव नेदिष्ठमपि परमात्मानं दविष्ठं करोति । अतिसंनिहितोपि प्रतिक्षणमक्षुण्णकारुण्येन जीवान्पाताद्घाताच्च सन्त्रायमाणोपि किङ्कर इवानुचर इवानिद्रं जीवकल्याणमेवेह–मानो जीवाननुगच्छन्नपि परमात्मा चिरसंचिताविघ्नकराशिरशनानिबद्धैर्विद्धैश्च कामक्रोधाद्यन्तर्मलकुटिलकठोरकण्टकैर्जीवैर्नाधिगम्यते । निरस्यतामज्ञानम् । उपास्यतां भगवती विद्या । आस्यतां स्वरूपे । रस्यतां च रसस्वरूपो भगवानित्यन्तरशब्दप्रसूताशयः । तथैवोपपत्तिरपि । यदि स स्याद्दूरस्थो गुहाप्रवेशोऽनुपपन्न एव स्यात् । ननु क्व दृष्टोन्तरशब्दः सामीप्यवाचक इति जिज्ञासा चेदुच्यते । सर्वज्ञो हि भगवान्वेदोन्तरशब्दं सामीप्यार्थे प्रयुङ्क्ते । तथाहि–[1]"यज्ञो हीडो वो अन्तर आदित्याः" (ऋ०८।१८।१९) "नि हि षत्सदन्तरः पूर्वो अस्मत्" (ऋ० १०।५३।१) "न यत्परो नान्तर आदधर्षत्" (ऋ०२।४१।८) इत्यादिषु मन्त्रेषु दृश्यमानः श्रूयमाणश्चान्तरशब्दः सामीप्यार्थक

(१) हे आदित्या अदितेरविनाशिनः पुत्रा जीवाः ! वो युष्माकं हीडो गन्तव्यः प्राप्तव्यो यज्ञः परमात्मा अन्तरः समीपस्थः ।

(२) अस्मत्पूर्वोऽस्माकं पूर्वज इत्यर्थः समीपस्थः सन् नि षत्सद् हि निषीदति खलु । युष्माकं समीप एव स तिष्ठतीति भावः ।

एवेति वेदविदां वित्तिः ॥१।२।१३॥

अत्रैवोपपत्तिमाह—

## स्थानादिव्यपदेशाच्च ॥१।२।१४॥

जीवकर्मफलानुभवाय भावितं भवं गुहारूपं प्रविश्य स्थितस्य परमात्मनः स्थानादिव्यपदेशोपि श्रूयते श्रुतिषु। स च समीपस्थस्यैव संभवति न दूरस्थस्य। तथाहि, [1]"यस्य भूमिः प्रमान्तरिक्षमुतोदरम्। दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः॥ "यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः। अग्निं यश्चक्र आस्यं तस्मै०" "यस्य वातः प्राणापानौ चक्षुरङ्गिरसो भवन्। दिशो यश्चक्रे प्रज्ञानीस्तस्मै०" (अथ०१०।७।३२-३४) "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" (शु०य०३१।१) "पादोस्य विश्वा भूतानि" (शु०य०३१।३) इत्यादिभिर्वेदवचनैः परमात्मनः स्थानव्यपदेशो विधीयते। न केवलं स्थानव्यपदेशो रूपव्यपदेशोपि, [2]"हिरण्यजिह्वः सुविताय नव्यसे" (शु०य० ३३।८४) (तै०सं०१।४।२४) "हिरण्यपाणिमूतये सवितारमुपह्वये" (तै०सं०१।४।२८) "हिरण्यकेशो रजसो विसारि" (तै०सं०३।१।११) "हिरण्यबाहवे हरिकेशाय" (शु०य०१६।१७) इत्यादिभिः सांहितैर्मन्त्रैः क्रियते। एतादृशः स्थानव्यप-

---

(१) स्पष्टार्थः।

(२) हिरण्यजिह्वो हितरमणीयजिह्वस्त्वं नव्यसे नवतराय सुविताय (सु इताय) सुखाय।

देशो रूपव्यपदेशश्च ब्रह्मणः सर्वस्थानेषु सर्वेषु च रूपेषु व्यापकतया संनिधायावस्थितस्यैव घटते नान्यथा ॥१।२।१४॥

अत्रैवान्यामप्युपपत्तिमाह--

## सुखविशिष्टाभिधानादेव च ॥१।२।१५॥

सुखेन विशिष्टाः सुखविशिष्टास्तेषामभिधानं कथनं निरूपणं वेति सुखविशिष्टाभिधानं तस्मात्। तत्सन्निधानेन जीवानां सुखविशिष्टत्वस्याभिधानादपि प्रतीयते स परमात्मान्तर इति। सन्निहिता हि सूर्यरश्मयस्तापयन्ति, संनिहितो हि हैमनः पवनः शिशिरयति, संनिहितो हि वह्निर्दहति, सन्निहितश्च प्रदीपः प्रकाशयति। एतादृगेवानुभवः सर्वेषाम्। अतिबलदुःखानलकवलिता हि जीवाः सुखावाप्तये प्रयतमाना दृश्यन्ते। सुखं तु न जगति न वा जागतेषु पदार्थेषु न वा जीवेषु। तन्निधानं तु ब्रह्मैव। तत्सन्निधानेन विना तन्नाप्यते। "मदेम तत्र परमे व्योमन्" (अथ०७।५।३) इत्यत्र मदेमेत्यनेन सुखविशिष्टत्वं जीवानां तत्सनिधावेवाभिहितम्। परमे व्योमन्निति सामीप्यार्थे सप्तमी। कूपे तिष्ठतीतिवत्। एतेन ज्ञायतेन्तर एव परमात्मा न दूरस्थः ॥१।२।१५॥

स्वाभिलपितं समर्थयते--

## अत एव च तद्ब्रह्म ॥१।२।१६॥

तदतिसंनिहितमस्ति सर्वत्राबाधितप्रवेशं चास्ति तत्सन्निधानेन च जागततापप्रतप्ता जीवाः सुखविशिष्टा भवन्त्यत एव

च तद्ब्रह्मेत्युच्यते। बृंहणाद्ब्रह्म भवति। बृहि वृद्धौ। सर्वांस्तद्वर्धयति सुखशान्त्यादिप्रदानेन। अथर्ववेदेप्युक्तम् "तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते। सर्वा ह्यस्मिन्देवता गावो गोष्ठ इवासते॥" (११।८।३२) इत्यादिनेदमेव। हि यस्मादस्मिन् पुरुषे पुरुषु बहुषु सर्वेषु पदार्थेषु शयनशीले नितरामन्तरे सर्वा देवताः सर्वे पदार्था आसते तिष्ठन्ति तस्माद्विद्वांस्तत्त्वज्ञस्तं पुरुषमिदं ब्रह्मेति मन्यते। ननु नानेन मन्त्रेणैतत्सूत्रप्रतिपाद्योर्थः प्रतिपाद्यते। नानेनान्तरः परमात्मेत्युच्यते। सत्यम्। तस्मिंस्तेषां पदार्थानां स्थितिप्रतिपादनमुखेन परमात्मनोनन्तरत्वमप्युच्यत एवेति ॥१।२।१६॥

अत्रैव हेत्वन्तरमप्याह--

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥१।२।१७॥

श्रुतेत्यत्र श्रुधातुरनुष्ठानार्थको मनननिदिध्यासनयोरुपलक्षणं वा। न ह्युपनिषच्छ्रवणमात्रेण श्रुतिषु गीयमानस्य यानस्याधिगमः। एवमुपनिषच्छब्दस्तत्त्वज्ञानपरः। उपनिसादयति ब्रह्मणः सायुज्यं प्रापयतीतिव्युत्पत्तिबलात्। श्रुतोपनिषद्येन स श्रुतोपनिषत्कोनुष्ठिततत्त्वज्ञान इत्यर्थः। तस्य गतिः श्रुतोपनिषत्कगतिस्तस्या अभिधानम्। तस्माच्छ्रुतोपनिषत्कगत्याभिधानात्। चोप्यर्थकः। तथा चायं सूत्रार्थः–श्रुतोपनिषत्कस्यानुष्ठिततत्त्वज्ञानस्योपलब्धतत्त्वज्ञानप्रतिष्ठस्य ब्रह्मैव गतिर्गन्तव्यं प्राप्तव्यमित्यस्याभिधानादपि संनिहितं तद्ब्रह्मैव। अयमाशयः। अत्रोपनिषच्छब्देन न प्रसिद्धोपनिषद्ग्रन्थानां ग्रहणम्। ब्रह्मसूत्रपदैश्चैवेतिगीता-

वाक्यगतब्रह्मसूत्रपदेन ब्रह्मसूत्रग्रन्थाग्रहणवत् । यथा ब्रह्मसूचकपदानि ब्रह्मसूत्राणि भवन्ति तथैव ब्रह्मगमयितारो मन्त्रा उपनिषत्पदभाजो भवन्ति । तथा च ब्रह्मावेदकवेदश्रवणेन श्रुतार्थस्य मननेन मतार्थस्य निदिध्यासनेन च स्थिरतत्त्वस्य मुमुक्षोर्जीवतोपि शनैःशनैर्महता कालेन निर्मथितकषायकणस्य विद्वच्चणस्य ब्रह्मवित्ता भवति। तदानीमेव तस्य ब्रह्मरूपतापि समापद्यते । ननु श्रुतोपनिषत्कस्य ब्रह्मैव गतिरित्यभिधाने किं खलु कार्तार्थ्यमन्तरशब्दस्य ? उच्यते । अन्तरः सामीप्यार्थक इत्युक्तम् । समीपस्थ एव गतिर्भवति न तु दूरस्थः । गतिर्हि शरणं त्राता वा । समीपस्थो हि दण्डोनिष्टताडनोपयोगी न दूरस्थः । समीपस्थो हि सखा साहाय्यदाने समर्थो न दूरस्थः । समीपस्थो हि दीपः प्रकाशप्रदानक्षमो न दूरस्थः । ननु दूरस्थोपि सूर्यः प्रकाशं प्रयच्छत्येवेति न सामीप्यमतीवोपयुक्तम् ? विचारमूढोसि । दूरस्थस्यापि भगवतो भास्करस्य भासस्तस्मात्प्रसृता इह पदार्थसंगताः सत्यः परार्थान् प्रकाशयन्तीति गृहाण । "त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष इध्यसे ।" (ऋ० १।३१।१३) इति मन्त्रेपि मदुक्तार्थ एव संश्लिष्टः । तथाहि, हे अग्ने परमात्मन् , अनिषङ्गाय दुरितसंसर्गनिरोधाय भवभवविभवपराभविनो भविनो यज्यवे यज्योर्याजकस्योपासकस्यान्तरः समीपस्थः सन्नेव पायु रक्षको भवसि चतुरक्षश्चतुरे ज्ञानिनि क्षियसि निवससीति चतुरक्षश्च इध्यसे दीप्यस इत्येवं प्रतिपादयन्ति वेदाक्षराणि विदधत्येवानुकूल्यमस्मदुक्तेः ॥१।२।१७॥

ननु स्थानरूपव्यपदेशो जीवसन्निधानेपि जीवानां सुख-विशिष्टत्वं श्रुतोपनिषत्कस्य गतित्वं च जीवेपि संगच्छेरन्, ब्रह्मण इव तस्यापि व्यापकत्वात् । न संगच्छेरन् । कुतः ? अणुत्वात्तस्य । कथमणुत्वं तस्य ? कथं च व्यापकत्वं तव मते तस्य ? जीवो ब्रह्मैव नापर इत्याद्युक्त्या ब्रह्मण इव तस्यापि व्यापकत्वमपराहतम् । सत्यम् । जीवो ब्रह्मैव नापर इत्याद्युक्तिरेव त्ववैदिकी । न हि चतुर्ष्वपि वेदेषु कुत्रापि जीवब्रह्मणोरभेदः प्रतिपादितः । तदेवाग्निस्तद्वायुरित्यादिना तु भौतिकपदार्थानां ब्रह्मरूपत्वं प्रदर्शितं न तु जीवब्रह्मणोरभेदः । इन्द्रं मित्रं वरुणमग्निमाहुरित्यादिनापि नोभयोरभेदः प्रतिपाद्यते प्रतिपाद्यते च येषां भौतिकशरीराणामिन्द्रमित्रवरुणयमेत्यादयः संज्ञास्तेषामभेदः । तस्माज्जायमानस्य तत्त्वमिति प्रतिपादने वेदस्य तात्पर्यम् । अङ्गादङ्गात्प्रभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासीतिरीत्यैव तस्माज्जातस्य तत्त्वं प्रतिपाद्यते । यदि जीवोपि कश्चन भूतादिरिव भौतिकपदार्थ एव तर्हि नास्माकं विवादो भवतु सोपि परमात्मरूप एव । जीवसत्ताभेदे तु न जीवब्रह्मणोरभेदः सुसाधः । सूक्ष्मेक्षिकया तु प्रतीयते वैदिको जीवो जन्य एव । "स नो बन्धुर्जनिता स विधाता" "स नः पिता जनिता" (अथ० २।१।३) इत्याद्युक्तयो बहवः सन्ति वेदे । "तेन ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः"(ऋ० १। १६४।५०) "यत्र देवा अमृतमानशानाः" (अथ० २।१।५) इत्यादिवचनेभ्यश्च जीवानां नित्यत्वमपि निर्बाधम् । जन्यत्वं नित्य-

त्वं च विरुद्धम् । यदि नित्यो जीवो न जीवब्रह्मणोरभेदो यदि सोनित्यस्तथापि नोभयोरभेदः । नित्यानित्ययोर्विरुद्धधर्माक्रान्तयोर्जीवब्रह्मणोरभेदः पराहत एव । मोक्षव्यवस्था तु नित्यत्वे जीवानां जीवत्वहानावनित्यत्वे च जीवहानौ सम्पादनीया । "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (शु०य०४०।७) इत्यत्र तु भूतजीवात्मैकत्वं प्रतिपाद्यते न तु जीवब्रह्मैकत्वम् । "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः" इति तन्मन्त्रपूर्वार्धे स्पष्टप्रतिपत्तेः । भवतु, अर्थान्तरमेतत् । जीवाणुत्वविचारस्तु कर्तव्यः । अणुत्वे तस्य न किमपि प्रमाणमुपन्यस्यते । न हि सर्वत्र सर्वदा प्रमाणस्यावश्यकता । विभ्वणु चेति परिमाणद्वयमेव । विभुपरिमाणं सर्वत्र ब्रह्मण्येव व्यवस्थापितम् । पारिशेष्याज्जीवस्याणुपरिमाणमितिसिद्धम् । न सिद्धम् । तृतीयमपि परिमाणं मध्यममिति नाम । तदेव किं न स्याज्जीवस्य ? न स्यात्तत् । जीवस्य मध्यमपरिमाणत्वस्वीकारे नरशरीरे तदाकारो गजशरीरे गजशरीराकारः पिपीलिकाशरीरे च तदाकारो भवन्सोपचयोपचयौ विकारौ भजमानो नित्यत्वाद्भ्रश्येत । जीवनित्यत्वानित्यत्वयोरुभयोर्नित्यत्वमेवास्माकं पूर्वजपरम्परातोभिमतम् । तथा च विभुत्वमध्यमत्वयोरसंभवादणुत्वमेव जीवानाम् । भवतु स्वरूपतोणुत्वं तस्य । ज्ञानतस्तु विभुत्वमेव । जीवधर्मभूतं ज्ञानं विभ्विति विशिष्टाद्वैतवादिनः । तद्द्वारा सर्वत्रावस्थानं तस्य न विरुध्यते । एवं च धर्मभूतज्ञानद्वारा जीवस्य व्यापकत्वात्संभवन्त्येव ब्रह्मधर्मा जीवेपि । न सम्भवन्ति । कुतः ? न ह्यनुमितम-

नुमतं तद्धर्मभूतज्ञानं तस्य सर्वज्ञत्वाय सर्वशक्तित्वाय च कल्पते। दीपो हि तत्रोदाहरणम्। यथा दीप एकदेशस्थोपि स्वप्रकाश-किरणद्वारा दूरस्थान्यपि वस्तूनि प्रकाशयति तथैवैकदेशस्था जीवो दूरस्थानपि पदार्थान् पश्यति। नैष दृष्टान्तः सन्तोषा-वहः। न स दीपो जगदण्डान्तर्वर्तीनि सकलान्येव वस्तूनि प्रकाशयति किन्तु तद्गृहान्तर्वर्तीन्येव गृहाद्बहिरपि नातिदूरव-र्तीन्येव। एवं जीवधर्मभूतज्ञानमपि जीवाधिकरणीभूते देहे योगाभ्यासादिद्वारा कथञ्चित्पृथग्देशेपि चेष्टादि प्रकाशते। नैतावता तस्य व्यापकत्वं समायातम्। किं च तद्धर्मभूतज्ञानं न निरपेक्षं किञ्चित्साधयितुं समर्थम्। व्यापकं तथाविधं सदपि तद् मनःसहकारेणैव शिरसि मम वेदना पादे मे वेदनेत्यादि ज्ञानं वितरति स्वधर्मिणे। तदप्ययौगपद्येनैव न यौगपद्येन। तथैव सर्वेषामनुभवः। भवतु भवतां तथाविधोनुभवः किं नस्तेन? ज्ञानविभुत्वेन जीवविभुत्वमेव। विभुत्वाच्च तस्योपरिनिर्दिष्टा ब्रह्मत्वसाधनसमर्था धर्मा जीवेपि स्युरित्याशङ्क्याह—

## अनवस्थितेरसम्भवाच्च नेतरः ॥१।२।१८॥

इतरो जीवो न भवितुमर्हति ब्रह्म, न वा लभते पूर्वोक्ता-न्ब्रह्मधर्मान्। कस्मात्? अनवस्थितेः। न हि जीवानां नियता क्वचिदवस्थितिः। कानिचित्कर्मफलान्यनुभूयैकं शरीरं परित्य-ज्यापराणि कर्मफलान्यनुभवितुमपरं शरीरं गृह्णतस्तस्य न संभवत्येकत्रावस्थानम्। तेन च न कस्याप्यात्यन्तिकदुःखपरा-जुभूषयाश्रयणीयतां व्रजेदसौ। अपरोयं हेतुः—असम्भवाच्चेति।

न हि भिक्षुको भिक्षुकान्तरं याचते । न वा भीतो भीतस्यापरस्य भीतिमपहरति । सर्व एव हि जीवा भवविषमविषधरदंशविसृतविषविमूर्छिता अविकलाकलिकलाधरकलाकलापकमनीयमदमनीयदयालङ्कारप्रभाप्रभावितं परमरमणीयं परमात्मानं शरणं याचमाना हि दृश्यन्ते । कस्कः कस्य कस्य गतिर्भवेत् ? एवं च जीवो न ब्रह्मेति सिद्धम् ॥१।२।१८॥ इत्यन्तराधिकरणम् ॥४॥

(अथान्तर्याम्यधिकरणम् ॥५॥)

अवसितेनान्तराधिकरणेन ब्रह्मणः सर्वान्तरत्वमभिधाय सर्वान्तर्यामितोपदेशायाह—

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥१।२।१९॥

अन्तरं तद्ब्रह्माधिदैवादिष्वन्तर्यामि । अत्रादिशब्देनाधिभूतमध्यात्ममित्यादीनां ग्रहणम् । दैवेषु भूतेषु मनस्सु च जीवानामन्तःस्थितः संस्तत्सर्वं यमयति नियमयतीत्यन्तर्यामि । उक्तं च वेदे "स सव्येन यमति व्राधतः" (ऋ०१।१००।९) इति । स परमात्मा सव्येन दक्षिणेन व्राधतो महतोपि सूर्यपृथिव्यादीन् पदार्थान् यमति यमयतीत्यर्थः । "इन्द्रो विश्वस्य दमिता" (ऋ०५।३४।६) इत्यनेनापि विश्वस्य नियन्ता परमात्मेत्युक्तम् । "दमूना देवः सविता" (अथ०७।१४।४) इत्यनेनापि सवितुर्जगदुत्पादयितुर्देवस्य दिव्यगुणविशिष्टस्य परमात्मनो जगद्दमयितृत्वमभिहितम् । ननु सर्वेषामन्तःस्थितः सन्परमात्मा यमयति नियमयत्युपरमयति चानिष्टाद्व्यापाराच्चेत्कथं तर्हि निरर्थकं क्लेशकारणं भुवो वेपनमकाले घनगर्जनमव्यवहार्यस्य व्यवहरणं

मनुष्येषु दृश्यन्ते ? परमात्मना नियमितानां पदार्थानां मनुष्याणां चापथगामित्वं न संभवेत् । सत्यम् । इदं न प्रष्टव्यम् । अतिप्रश्नोयम् । अतिप्रश्नेन मूर्धा ते विपतिष्यतीति ॥१।२।१९॥

ब्रह्मातिरिक्तस्य प्रधानस्यान्तर्यामित्वमाशङ्क्य समाधत्ते—

## न च स्मार्तमतद्धर्माभिलापात् ॥१।२।२०॥

श्रुतिविहितं श्रौतमित्युच्यते । स्मृत्योपकल्पितं स्मार्तमित्युच्यते । श्रौतभिन्नं स्मार्तमित्याशयः । स्मार्तपदेनाचिदिह समचीयत । तथा चायं सूत्रार्थः—न स्मार्तमचिज्जातमन्तर्यामि भवितुमर्हति । कुतः ? अतद्धर्माभिलापात्=तस्याचिज्जातस्य धर्मास्तद्धर्मास्तेषामभिलापः । न तद्धर्माभिलापोतद्धर्माभिलापस्तस्मात् । अन्तर्यामिणो ब्रह्मणः सर्वज्ञत्वसर्वशक्तित्वसर्वव्यापकत्वादीनां धर्माणामचित्यभिलापाभावान्न तत्रान्तर्यामित्वम् ॥ ॥१।२।२०॥

चित्पदसङ्केतितस्य जीवस्याप्यन्तर्यामित्वं निवारयितुमाह—

## शारीरश्च ॥१।२।२१॥

उपरिष्टाद्दृष्टो नकारोत्रानुषज्यते । शरीरसम्बन्धी शारीरः । स च जीवः । कर्मफलानुगुणायातसुखदुःखानुभवादिभिः शरीरेण सह जीव एव संबध्यते नान्यः । सोपि नान्तर्यामी । कुतः ? अतद्धर्माभिलापादेव । ननु चित्त्वनित्यत्वादयो धर्मा ब्रह्मसमानाः सन्त्येव तस्मिंस्तर्हि कुतो नान्तर्यामित्वं तस्य ? न हि चित्त्वनित्यत्वमात्रं ब्रह्मत्वोपधायकम् । सर्वज्ञत्वसर्वशक्तित्वसर्वव्यापकत्व-

जगत्स्रष्टृत्वादिधर्मा ब्रह्मणः परिचायकाः । न ते संभवन्त्यल्पशक्तौ जीवे । ततो न जीवान्तर्यामीति ॥१।२।२१॥

अन्यमपि हेतुमाह—

## उभयेपि हि भेदेनैनमधीयते ॥१।२।२२॥

उभयेपि भेदवादिनोभेदवादिनश्चाप्येनं जीवात्मानं परमात्मानं वा भेदेन हि भेदेनैवाधीयते पठन्ति । तथाहि [1]"न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते । अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥" (ऋ० ७।३२।२३) "अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥" (ऋ०७।३२।२२) "अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः" (ऋ० १।१६५।९) "ते ह नाकं महिमानः [3]सचन्त यत्र पूर्वे साध्याः सन्ति देवाः" (ऋ० १।१६४।५०) इत्यादयो भेदवादिनां मन्त्राः । अभेदवादिनां चेमे—"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥"(ऋ० १।१६४।४६)"द्वा सुपर्णा सयुजा सखाया०" (ऋ० १।१६४।२०) तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन" (ऋ० १।१५६।३) "अग्निं विश्वा अभि पृक्षः

(१) त्वावांस्त्वादृशोन्यो दिव्यः पार्थिवो न अस्ति न वा जायते । न जातो न वा जनिष्यमाणः । हे मघवन्निन्द्र अश्वायन्तोऽश्वमिच्छन्तो वाजिनो धनमिच्छन्तो गव्यन्तो ज्ञानमिच्छन्तो वा त्वा त्वां हवामह आह्वयामः ।

(२) स्पष्टेयमृक् ।

(३) सचन्त सेवन्ते ।

सचन्ते समुद्रं न स्रवतः सप्त यह्वीः ।" (ऋ० १।७१।७) इत्याद्याः । हे मघवन्परमात्मन् , न केपि त्वत्तः श्रेष्ठा न वा त्वत्सदृशाः; ते ज्ञानिनोनन्यभक्ता वा नाकं सचन्ते सेवन्ते, इति ब्रुवाणा भेदवादिनो मोक्षावस्थायामपि परमात्मनो जीवस्य भेदमेव प्रदर्शयन्ति । अभेदवादिनोपि विप्राः, विश्वा पृक्षः=प्रजाः, स्तोतारः पिपर्तनेत्यादीनि बहुवचनपदानि प्रयुञ्जानाः भेदमेव विशदयन्ति । अयमत्राशयः । गर्भं जनुषा जन्मना पिपर्तन पूरयन्ति समापयन्ति, इत्यादिकथनेन ये जन्मात्यन्ताभावमापादयन्ति ते नाल्पा न वा कल्पितब्रह्मभेदाः । एतेन मोक्षदशायामपि जीवब्रह्मभेदमेव साधयन्ति ते ॥१।२।२२॥ इत्यन्तर्याम्यधिकरणम् ॥५॥

( अथादृश्यत्वादिगुणाधिकरणम् ॥६॥ )

पुनस्तज्जिज्ञासितं ब्रह्म कीदृशमित्याह—

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥१।२।२३॥

अदृश्यत्वादयो गुणा यस्मिन्सोऽदृश्यत्वादिगुणकः । परमात्मानमभिप्रेत्य पुंस्त्वम् । स हि परमात्माऽदृश्यत्वादिगुणको भवति । कथं विज्ञायते ? धर्मोक्तेः । अदृश्यत्वादिधर्माणामेवोक्तेः । तथा हि "(१)को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति" (ऋ० १।१६४।४ अथ० ९।९।४) इत्यनेन मन्त्रेण प्रथमं जातस्य प्रथमतो वर्तमानस्य ब्रह्मणो दर्शनं प्रतिषिध्यते । "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरम् " (शु०य०४०।८) इत्यनेनापि

(१) प्रथमं जायमानं जातं को ददर्श यदनस्थास्थिरहितः सन्नस्थन्वन्तमस्थिमन्तं बिभर्ति धारयति पालयति च ?

तस्य कायराहित्यं व्रणराहित्यं स्नायुराहित्यं च प्रतिपाद्यते। "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" (शु०य०।३१।१) इत्यनेनापि ब्रह्मणोऽशरीरत्वमेव द्योत्यते। शरीर्येव दृग्गोचरतामुपैति। अशरीरत्वे हि तस्य, शारीरगता दृश्यस्पृश्यत्वादयो धर्मा न तत्स्पृशन्ति। शरीरित्वे हि तस्य 'जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यती, ति वाष्यायण्यभिमताः षड्विकाराः पादार्पणं तस्मिन्कुर्वीरन्ननित्यत्वं तथा च दुर्वारं स्यात्तस्य १।२।२३॥

अदृश्यत्वादिगुणकं तद्ब्रह्मेत्युक्तौ प्रकृतिपुरुषयोरप्यदृश्यत्वादिगुणकत्वाद्ब्रह्मतापत्तिरित्याशङ्क्य समाधत्ते—

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥१।२।२४॥

विशेषणं च भेदव्यपदेशश्च विशेषणभेदव्यपदेशौ ताभ्याम्। विशेषणाद्भेदव्यपदेशाच्चेतरत्प्रधानमितरश्च शारीरो नादृश्यत्वादिगुणकौ। न ततस्तयोर्ब्रह्मतापत्तिः। कीदृशं विशेषणं कीदृशश्च भेदव्यपदेशः? उच्यते। [1]"यस्य त्रयस्त्रिंशद्देवा निधिं रक्षन्ति सर्वदा। निधिं तमद्य को वेद यं देवा अभिरक्षथ॥" (अथ०१०।७।२३) इतिमन्त्रेणाज्ञेयत्वविशेषणं ब्रह्मण उपदिष्टम्। [2]"यत्र देवा ब्रह्मविदो ब्रह्मजेष्ठमुपासते। यो वै तान्विद्यात्प्रत्यक्षं स ब्रह्मा वेदिता स्यात्॥" (अथ०१०।७। २४) इत्यनेन ब्रह्मविदां ज्येष्ठं ब्रह्मोपास्यत्वेनोपदिष्टम्। [3]"यदजः प्रथमं सं बभूव स ह तत्स्वराज्यमियाय यस्मान्नान्य-

---

(१) यस्य यम्। द्वितीयार्थे षष्ठी। निधिं निधीयते सर्वं यस्मिंस्तं परमात्मानं त्रयस्त्रिंशद्देवाः सर्वदा रक्षन्ति। देवा यूयं यं निधिमभिरक्षथ तमद्य को वेद विरल एव वेत्तीत्यर्थः।

(२, ३, ) निगदव्याख्याताः।

त्परमस्ति भूतम् ॥" (अथ०१०।७।३१) इत्यनेन सर्वापेक्षया परत्वं ब्रह्मणः प्रतिपादितम्। "यस्मै हस्ताभ्यां पादाभ्यां वाचा श्रोत्रेण चक्षुषा। यस्मै देवाः सदा बलिं प्रयच्छन्ति०" (अथ० १०।७।३९) इत्यनेन सर्वदेवपूज्यत्वं ब्रह्मण उपपादितम्। [1]"सर्वाणि तस्मिञ्ज्योतींषि यानि त्रीणि प्रजापतौ ॥" (अथ० १०।७।४०) इत्यनेन सर्वज्योतिराधारभूतं ब्रह्मेत्युपवर्णितम्। इतिब्रह्मविशेषणम्। अथजीवविशेषणम्। [2]"अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानाम्। जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः। (अथ०९।१०।८) [3]"अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः। ता शश्वन्ता विषु-

---

(१) तस्य ज्ञानिनस्तमो दुःखमपहतं पाप्मना पापाच्च स व्यावृत्त इति पूर्वार्धार्थः। प्रजापतौ परमात्मनि यानि त्रीणि ज्योतींषि भूतभविष्यद्वर्तमानार्थज्ञानानि सर्वज्ञत्वमित्यर्थः। तानि सर्वाणि तस्मिञ्ज्ञानिन्यपि भवन्तीत्यर्थः।

(२) पूर्वार्धेन देहस्थितिवर्णनम्। कदाचित् अनत् प्राणत् जीवं सजीववत् तुरगातु शीघ्रगामि सत् एजद् गतिं कुर्वच्छये शेते शरीरम्। कदाचिच्च ध्रुवं निश्चेष्टं सत् पस्त्यानां गृहाणां मध्ये आ शेते भूमौ पतितं तिष्ठति। मृतस्य शरीरस्य च जीवो मर्त्येन सयोनिः शरीरयोनिसमानख्यातिमांस्तथाप्यमर्त्यः स्वधाभिः स्वकर्मभिः सह चरति शरीरान्तरं व्रजति।

(३) मर्त्येन शरीरेण सयोनिः समानयोनिरमर्त्यो जीवः स्वधया कर्मभिर्गृभीतो गृहीतोपाङ् एति नीचैर्गच्छति प्राङेति उच्चैश्च गच्छति। ज्ञानस्य न्यूनता नीचैर्गमनं बाहुल्यं चोच्चैर्गमनमिति ध्येयम्। ता तौ जीवपरमात्मानौ शश्वन्ता शाश्वतौ विषुचीना सर्वत्राञ्चनशीलौ वियन्ता वियन्तौ यत्र तत्र लोके वा देशे वा गच्छन्तौ (एकः कर्मफलभोगायापरः कर्मफलप्रदानाय)। तयोर्द्वयोरन्यं जीवं नि चिक्युर्लोका जानन्ति परमन्यं परमात्मानं न नि चिक्युर्न जानन्ति।

चीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यम् ॥ (ऋ० १।१६४।३८) इत्याभ्यां जीवस्य जनिमत्त्वं मृतिमत्त्वं चानुमोद्येते। [1]"न वि जानामि यदि वेदमस्मि निण्यः संनद्धो मनसा चरामि।" (ऋ० १।१६४।३७) इत्यनेन जीवस्य स्वरूपानभिज्ञत्वं बद्धत्वं च निगद्यते। [2]"गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः। सुमित्रः सोम नो भव ॥" (ऋ० १।९१।१२; तै०सं०४।३।१३।५) इत्यनेन पुष्टिसमर्जनार्थं जीवस्य प्रार्थयितृत्वमुच्यते। [3]"विश्वानि देव सवितर्दुरितानि परा सुव। यद्भद्रं तन्न आ सुव ॥" (ऋ० ५।८२।५) इत्यनेन दुरितापाकृतये भद्रावाप्तये च प्रार्थयितृत्वं जीवस्य निर्दिश्यते। इति जीवविशेषणम्। विशेषणं धर्मः। विशेषणभेदेन धर्मिभेदो भवति। स्वरूपस्वभावादिभिः परस्परभिन्नयोरुभयोश्चैतन्ययोः प्रधानादपि भेदो निर्दिष्टो वेदेषु सर्वत्रैव। ब्रह्मरचितत्वाद्ब्रह्मनियाम्यत्वाच्च प्रधानकार्यं प्रधानं च ब्रह्मतो भिन्नमेवेति लोकेपि सुस्पष्टम्। अतोदृश्यत्वादिगुणकं ब्रह्मैवेति ॥१।१।२४॥

---

(१) यत इव यद्यपि निण्योन्तर्हितज्ञानतया मूढचेता अहं संनद्धः कर्मभिर्मनसा वा मनोधीनो भूत्वेत्यथश्चरामि परन्तु इदमस्मीति न वि जानामि कोहं कीदृशोहमित्यादि न जानामीतिभावः।

(२) हे सोम चन्द्रवच्छीतल रमणीय च गयस्फानो धनवर्धकोमीवहा रोगनाशनो वसुविद्धनलम्भकः पुष्टिवर्द्धन आध्यात्मिकाद्युन्नतिकारकः सुमित्रः शोभनमित्रयुक्तो नोस्माकं भव।

(३) देव सवितः। विश्वानि दुरितानि परा सुव विनाशय। यच्च भद्रं तन्नोस्मभ्यमा सुव सम्पादय।

हेत्वन्तरमाह—

रूपोपन्यासाच्च ॥१।२।२५॥

रूपस्योपन्यासो रूपोपन्यासः। तस्माच्च। चः समुच्चये। रूपोपन्यासो रूपनिर्देशो रूपनिरूपणं वा। यत्र नास्ति स्वकीयं रूपं तथाविधं तत्रैव रूपकालङ्कारः प्रयुज्यते। "ब्राह्मणोऽस्य मुखमासीत्" इतिमन्त्रे मुखविरहिते ब्रह्मणि मुखनिरूपणम्। अबाहुनि च तस्मिन्बाहुनिरूपणम्। अपादे च तस्मिन्पादनिरूपणम्। अन्येऽपि रूपनिरूपकाः प्रागुक्ता मन्त्रा इहामन्त्रयितव्याः। न हि कुत्रापि जीवे रूपनिरूपणं दृश्यते। प्रारब्धवशाद्रूपवत्त्वात्कायवत्त्वाच्च तस्य। प्रकृतेरपि न तन्निरूपणम्। सर्वाण्येव रूपाणि तस्या एवेति। अतः सिद्धमदृश्यत्वादिगुणकं ब्रह्मेति ॥१।२।२५॥ इत्यदृश्यत्वादिगुणाधिकरणम् ॥६॥

( अथ वैश्वानराधिकरणम् ॥७॥ )

न केवलमेतदेवापि तु—

वैश्वानरः साधारणशब्दविशेषात् ॥१।२।२६॥

वैश्वानरोऽपि ब्रह्म। वैश्वानरशब्देनापि तद्ब्रह्माभिधीयत इत्यर्थः। कुतः? साधारणशब्दविशेषात्। साधारणस्य वैश्वानरशब्दस्य ब्रह्मासाधारणैर्धर्मैर्विशेषाद्विशेष्यमाणत्वादित्यर्थः। विशेष्यत इति विशेषः। अथवा साधारणशब्दयोरात्मवैश्वानरयोर्विशेषः साधारणशब्दविशेषस्तस्मात्। यथा तत्तत्स्थलेष्वात्मशब्दो ब्रह्मणि साधारण एवं वैश्वानरशब्दोऽपि साधारण एव। यथातनादात्मा साधारणशब्दतां गतस्तथा विश्वेषां नराणां

हितत्वाद्वैश्वानरोपि ब्रह्माभिधाने साधारणः। किमुदाहरणम्? श्रूयताम्। "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः।" (ऋ०१।९८।१) "इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण।" (शु० य० २६।७) वैश्वानरो न ऊतये आ प्रयातु परावतः। अग्निर्नः सुष्टुतीरुप॥" (शु०य०१८।७२) "वैश्वानरो न ऊत्याऽऽप्रयातु परावतः। अग्निरुक्थेन वाहसा॥" (तै०सं०१।५।११) "वैश्वानरो रश्मिभिर्नः पुनातु।" (अथ०६।६२।१) इत्यादीन्यत्रोदाहरणानि। ननु लौकिकाग्निरपि वैश्वानरः। "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्।" (ऋ०१०।८८।१२) इत्यादौ। बाढमस्त्येव वैश्वानरशब्दो लौकिकाग्निवाचकः। तत्र नास्माकं विरोधः। वैश्वानरशब्दोग्निमेव नियमेन ब्रूत इत्यत्र विरोधः। क्वचित्सोग्निमपि बोधयति क्वचिच्चोपासनावसरे प्रयुक्तो ब्रह्माप्यभिधत्ते। सर्व एव वैदिकमन्त्रा आध्यात्मिकमाधिदैविकमाधिभौतिकं चेति त्रिविधमर्थराशिमुपहारीकुर्वन्तीति तु धीर्नापगच्छत्वित्येतदर्थमयमायासः॥१।२।२६॥

अत्र प्रकरणे स्मर्यमाणानां वचनानां गतिमाह—

## स्मर्यमाणमनुमानं स्यादिति॥१।२।२७॥

वैदिकप्रमाणपरिचयार्थमितिश्रुतेरिति वेतिश्रूयत इति वेतिश्रुतमितिवेत्यादिरीत्या श्रुधातुः प्रयुज्यते। वेदभिन्नप्रमाणपरिचयार्थमितिस्मृतेरिति वेतिस्मर्यत इति वेति स्मृतमिति वेत्यादिरीत्या स्मृधातुः प्रयुज्यत इति बोद्धव्यम्। अस्मिन्सूत्रे

स्मर्यमाणमितिपदमपि स्मृधातोर्निष्पन्नं सच्छ्रुतिभिन्नमेव प्रमाणं परिचाययति। स्मर्यमाणमिति कर्मणि वर्तमाने शानच्। विष्णुपुराणादिकं व्यासेनैव समस्क्रियत इति बहुलजनवादः। ततः पुराणादिकं स्मृतिरेव भवितुमर्हति। तदानीं व्यासकाले कानिचित्पुराणानि प्रणीयमानान्यासान्कानिचिच्च प्रणीतान्यासन्निति महाभारतादवगम्यते। तेन स्मर्यमाणं पुराणं मनुधर्मशास्त्रमप्युपासनाप्रकरणे वैश्वानरशब्दस्य परब्रह्मबोधकत्वे मानं स्यात्किन्तु तदनुमानमेव स्यात्। अनु पश्चाज्जातमानमनुमानं गौणं मानमित्यर्थ इति पूर्वं गतम्। श्रुतीनां सहकारिप्रमाणं स्मर्यमाणं स्यादितिसूत्रतात्पर्यम्। न हि श्रुतिवचनेषु स्मृतिव्यपदेशो युक्तः। व्यभिचारात्। सूत्रान्तस्थेति शब्दस्य हेत्वर्थता युक्ता। यतस्तत्स्मर्यमाणं ततोनुमानमित्यर्थः। स्यादिति संभावनायां लिङ्। सांख्यादिदर्शनेष्वपि स्मृतिशब्दप्रयोगो व्यासस्येष्ट इति तु प्रतिभाति। वेदेभ्योन्यत्रापि यदि वैश्वानरशब्दो ब्रह्मणि प्रयुक्तश्चेत्तदनुमानत्वेनैव ग्रहीतव्यमिति सूत्रार्थः ॥१।२।२७॥

असन्तुष्यन्निव वैश्वानरशब्दस्य ब्रह्मवाचकत्वसमर्थने शङ्काशय्यामास्तीर्य व्यपोहति भगवान्—

**शब्दादिभ्योन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ १।२।२८॥**

अग्न्यर्थवाचको हि बहुषु स्थलेषु प्रयुक्तो वैश्वानरशब्दः।

कुत्र? वेदेषु। तथाहि, वैश्वानरं ज्योतिः" (तै०सं० १।१।४) "संवत्सरो वा अग्निर्वैश्वानरः" (तै० सं०२।२।५)"वैश्वानरं भस्मना" (तै०स०५।७।९।६) "वैश्वानरमृताय जातमग्निमित्याह वैश्वानरं हि देवतयाऽऽयुरुभयतो वैश्वानरो गृह्यते" (तै० सं०६।५।२) "वैश्वानर्यर्चा पुरीषमुपदधातीयं वा अग्निर्वैश्वानरः" (तै०सं०५।६।६) इत्यादिषु। एतैर्वचनैर्ज्ञायते लौकिकानल एव वैश्वानरशब्दवाच्यः। शब्दादिभ्य इत्यत्रादिशब्दः प्रकारे। प्रकारश्च सादृश्यम्। तथा च वैदिकाः शब्दा ग्रहीतव्या लौकिकाश्चापि। के ते लौकिकाः? तदानीं प्रायेण सर्वैः सर्वत्र भाष्यमाणाः। यदि तैत्तरीयसंहिताया वेदाभिधानं न रोचते कस्मैचित्तदा तत्रोक्ताः शब्दा अपि लौकिका एव। तदा वैदिको वैश्वानरशब्दो "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरम्" (ऋ० १०।८८।१२) इतिपूर्वोक्तो ग्राह्यः। एतेभ्यः शब्दादिभ्योवगम्यते लौकिक एव वैश्वानरो न ब्रह्मेति। तथा, अन्तः-प्रतिष्ठानाच्च लौकिक एव वैश्वानरः। किमिदमन्तःप्रतिष्ठानं नाम? यावान्पदार्थराशिर्विद्यते महति जगति सर्वत्रैवान्तः-प्रतिष्ठा वैश्वानरस्य। अरण्योर्लौहयोरपि घर्षणतो जायमानो हि बहुधावलोकितः सः। "पुरुषेन्तःप्रतिष्ठितं वेद" (शत०१०।६।१।११) इत्यनेन नरोदरप्रतिष्ठितो जाठरः प्रतीयते। एताभ्यां हेतुभ्यां भवत्येवावगतिर्वैश्वानरो लौकिकोग्निरिति। एतत्सर्वमचारु। नैवं मन्तव्यं लौकिकोग्निरुपास्यत्वेन निर्दिष्ट इति। ननु प्रदर्शिता एव मया बहुशस्तथा प्रयोगाः।

कामं प्रदर्शिताः। न तु ते तव पक्षमक्षतं रक्षितुं क्षमन्ते। कुतः? दृष्ट्युपदेशात्। दृष्ट्या ह्युपदेशः। उपासकैरुपासनाकाले सर्वस्मिन्नेव ब्रह्मशरीरे शरीरिदृष्टिर्ब्रह्मदृष्टिः कर्तव्येति तथोपदेशः। नैतदत्राग्रहीमो नास्ति लौकिको वैश्वानर इति। किं तर्हि? न सर्वत्रैव लौकिको वैश्वानर इत्यनुरुन्ध्महे। यदप्यन्तःप्रतिष्ठानात्तदपि न। कुतो न? असम्भवात्। कुतोसम्भवः? पुरि शरीरे तिष्ठतीति पुरुषः। स चात्मैव न देहः। कथं तर्हि निरवयवे निरवकाशे चात्मनि स्यादन्तःप्रतिष्ठानमवयविनोवकाशापेक्षिणश्च लौकिकस्य वैश्वानरस्य? किं चैनं वैश्वानरं पुरुषमप्यधीयते। के तेध्येतारः? वाजसनेयिनः। तथा हि, "स एषोग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवाग्निं वैश्वानरं पुरुषविधं पुरुषेन्तःप्रतिष्ठितं वेद" (शत०१०।६।१।११) इति। तेन नोपासनाप्रकरणे लौकिको वैश्वानरो ग्रहीतव्यः ॥१।२।२८॥

अतीव प्रत्याचिख्यासितं लौकिकवैश्वानरं दूषयितुं पुनराह—

## अत एव न देवता भूतं च ॥१।२।२९॥

सर्वेष्वेव पदार्थेषु तदधिष्ठात्री देवता निवसतीतिविश्वासः श्रद्धाधनधौरेयाणाम्। कथं न वैश्वानरशब्देन तस्या एव ग्रहणमित्याशङ्कां समाधत्ते—अत एव=पुरुषमपि चैनमधीयते वाजिनोत एव वैश्वानरनियामिकायास्तदधिष्ठात्र्या देवताया अपि न ग्रहणम्। अत एव च भूतमपि लौकिकः कूपीटयोनिरपि नोपासनाप्रकरणे ग्राह्य इति ॥१।२।२९॥

अस्मिन्विषये जैमिनिमतमुपन्यस्यति—

## साक्षादप्यविरोधं जैमिनिः ॥१।२।३०॥

यदि वैश्वानरः साक्षात्=प्रसिद्धो लोकानल एव गृहीतः स्यात्तदा तमप्यविरोधं विरोधरहितं जैमिनिर्मन्यते स्म १।२।३०॥

कुतो न लोकानलग्रहणे विरोध इत्यत्र जैमिनिमतानुवर्तिनाश्मरथ्येन कृतं समाधानमाह—

## अभिव्यक्तेरित्याश्मरथ्यः ॥१।२।३१॥

अभिव्यक्तेरिति पञ्चम्यन्तम् । अभिव्यक्तिर्यथाकथञ्चित्प्राकट्यम् । ज्योतिष इति शेषः । सामर्थ्यात् । एवं च साक्षादनलोपासनेनापि ज्योतिषोभिव्यक्तिः स्यादित्याश्मरथ्यो मन्यते स्म ॥१।२।३१॥

जैमिनिमतानुसारिणो बादरेर्मतमाह—

## अनुस्मृतेर्बादरिः ॥१।२।३२॥

अनुस्मृतिः पौनःपुन्येन स्मरणम् । लोकानलमुपादायापि ब्रह्मणोनुस्मृतिर्भवितुमर्हतीत्यनुस्मृतेर्हेतोरेव साक्षादनल उपासनीय इति बादरिर्मन्यते । एतदेव "यथाभिमतध्यानाद्वा" (योग०१।३९) इतिसूत्रभाष्ये सांख्यप्रवचने भगवता व्यासेनोक्तम् । तथाहि "यदेवाभिमतं तदेव ध्यायेत् । तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति" ॥१।२।३२॥

अत्र जैमिनेः स्वमतं दर्शयति—

**सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥१।२।३३॥**

सम्पत्तिः प्राप्तिः। साक्षादनलोपासनेनापि निरन्तरज्योतिर्ध्यानधाराभिः परिपूतान्तःकरणे ज्योतिरवाप्तिर्भवतीति जैमिनिर्मेने। तथाहि स दर्शयत्युदाहरणादिभिः ॥१।२।३३॥

उपसंहरति—

**आमनन्ति चैनमस्मिन् ॥१।२।३४॥**

इति श्रीमद्रामानन्दाचार्य्यैः श्रीमद्व्यासमहर्षिभिः कृते वेदान्तदर्शने प्रथमाध्याये द्वितीयः पादः

अस्मिन्वैश्वानरे वैश्वानरशब्दबोध्ये ब्रह्मण्येनमुपासकं जीवमामनन्ति। के? आम्नाया वैश्वानरस्य सुमतौ स्यामेत्याद्याः। न हि लौकिकाग्नेः सुमतिर्विद्यते यदनुवर्तित्वमुपासकस्य स्यात्। अतः सर्वत्र वैश्वानरशब्देन परमात्मैव ग्राह्यः। परमात्मसुमतिवर्तित्वं न बाधितमुपासकस्य। परमात्मसुमतिवर्तित्वं हि परमात्मवर्तित्वम्। न हि परमात्मनस्तत्सुमतिर्भिद्यते। सुमतिर्ज्ञानम्। ज्ञानरूपो हि परमात्मा। वैश्वानरस्य सुमताविति भेदेन प्रयोगस्तु राहोः शिर इतिवत्। अनेनान्तिमसूत्रेणालम्बनार्थं लौकिकोनलोप्युपास्य इति नोच्यते उच्यते च मुख्यस्य परमात्मनो ध्यानम्।

अत्र किञ्चिदालोचनीयम्। वैश्वानरशब्देन किं ग्राह्यमिति विचारयता ध्यानाय लौकिकोप्यग्निर्ग्राह्य इति जैमिनेर्मतमुपस्थापितम्। तदनुवर्तिनोराश्मरथ्यबादर्योश्च तदनुग्राहकमेव मतं प्रतिपादितम्। सम्पत्तेरिति सूत्रेण पुनस्तदेवाम्रेडितम्। कोसौ जैमिनिः कोसावाश्मरथ्यः कोसौ च बादरिरिति तु न जानीमो वयम्।

जैमिनिरपि स्वमीमांसादर्शने बादरिं बादरायणं जैमिनिं चोल्लिलेख। तथा हि तस्य सूत्राणि-"द्रव्यगुणसंस्कारे बादरिः"(मीमां० ३।१।३) "कर्माण्यपि जैमिनिः फलार्थत्वात्" (मीमां०३।१।४) "विधिं तु बादरायणः" (मीमां०१०।८।४४) "विधिवत्प्रकरणविभागे प्रयोगं बादरायणः" (मीमां०११।१।६५) "कालाभ्यासेपि बादरिः कर्मभेदात्" (मीमां०८।३।६) तदावृत्तिं तु जैमिनि०" (मीमां०८।३।७) इत्यादीनि। शबरस्वाम्येतेषां सूत्राणां भाष्ये सर्वत्रैव "बादरिराचार्यो मन्यते स्म" "जैमिनिराचार्यो मेने" "बादरायणो मन्यते स्म" इति परोक्षभूतक्रियां व्यवजहार। तेनेदमपि निष्पादयितुं शक्यते कोप्यन्योपि जैमिनिरासीन्मीमांसादर्शनकारजैमिनेः पूर्वमिति। व्याससूत्रेभ्यः पूर्वमेव मीमांसादर्शनमस्तित्वमवालम्बतेतिनिर्विवादप्रायम्। पूर्वजायामपि कर्ममीमांसायामवरजस्य सूत्रकृद्व्यासस्य नामोल्लेखोन्यं बादरायणमपि कल्पयितुं प्रभवेत्। व्यासेनात्र पादान्तः उल्लिखिता निखिला आचार्या व्यासात्पूर्वभाविनस्तत्समकाला वेत्यत्रापि न विवादः। परन्तु तेषां का सा कृतिर्यत्रैतन्मतं प्रतिपादितमिति दुरूहमेव।

किं च "ब्रह्मणा ब्राह्मणानां च तथानुग्रहकाङ्क्षया। विव्यास वेदान्यस्मात्स तस्माद्व्यास इति स्मृतः॥ वेदानध्यापयामास महाभारतपञ्चमान्। सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम्॥ प्रभुर्वरिष्ठो वरदो वैशम्पायनमेव च॥" (महाभार० आ०प०, अ०६४।३०,३१,३२) इत्येतेन महाभारतीय-

व्यासवचनेनैव ज्ञायते जैमिनिर्व्यासशिष्य आसीदिति। शास्त्रदीपिकाया युक्तिस्नेहप्रपूरण्याख्यव्याख्यायां श्रीरामकृष्णपण्डितेन मीमांसाया एका परम्परा निरदेशि। सा चेत्थम्—"ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोपीन्द्राय, सोप्यग्नये। स च वसिष्ठाय, सोपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोपि जैमिनये। स च स्वोपदेशादनन्तरमिमं न्यायं ग्रन्थे निबद्धवानिति।" एतेनापि ज्ञायते जैमिनिर्व्यासशिष्य एवेति। यदीदं सर्वं प्रमाणं तर्हि विवेचनीयमिदं विद्वद्भिर्गुरुर्व्यासः स्वोक्तौ जैमिनिं साक्षित्वेनोपस्थापयितुं शक्नोति न वेति।

किं च व्याससूत्रेष्वत्र बहूनि सूत्राणि निस्तत्त्वचिन्तापराण्यत एव निरर्थकानीति मन्यामहे। जैमिनीयमीमांसादर्शनेपि तथाविधानि निरर्थकान्यत्यल्पार्थकानि वा कानिचित्सूत्राणि तृतीयाध्याये चतुर्थे पादे सन्तीति सर्वेषां मीमांसादर्शनविदुषां नाप्रत्यक्षम् ॥१।२।३४॥ इतिवैश्वानराधिकरणम् ॥७॥

इति सर्वतन्त्रस्वतन्त्र—परमहंसपरिव्राजक—स्वामिश्रीं-भगवदाचार्यमहाराजैः प्रणीते वेदान्तदर्शन—वैदिकभाष्ये प्रथमेध्याये द्वितीयः पादः

## अथ प्रथमेध्याये तृतीयः पादः

स्मारं स्मारं गुरोर्वाचमाचामति मदन्तरम्।
विष्णवद्व्यासपादानां वचो लोकोत्तरं रसम् ॥१॥

(अथ द्युभ्वाद्यधिकरणम् ॥१॥)

पौनःपुन्येन बद्धमतिसुबद्धं भवतीति न्यायमनुस्मृत्य प्राशस्त्येन बुभुत्सितब्रह्मस्वरूपमवगमयितुं रमयितुं चाधिकाधिकाः श्रुतीर्ब्रूते—

## द्युभ्वाद्यायतनं स्वशब्दात् ॥१।३।१॥

द्यौश्च भूश्चादी येषां ते द्युभ्वादयस्तेषामायतनं द्युभ्वाद्यायतनम्। दिवि भूशब्दं प्रत्युपपदत्वमारोप्य वर्षाभ्वादिवत्कथंचिद्यण्सिद्धिः। स्ववाचकः शब्दः स्वशब्दस्तस्मात्। मध्यमपदलोपी तत्पुरुषः। स्वशब्देन ब्रह्म ग्रहीतव्यम्। द्युभ्वादीनां पदार्थानां यदायतनमाश्रयस्तद्ब्रह्म वेदितव्यम्। द्युभ्वाद्याश्रयमात्रं ब्रह्म विवक्षितं न तु द्युभ्वादिसहितमपि। द्युभ्वादीनामनात्मत्वान्न तत्र ब्रह्मत्वव्यवहारः। सर्वं खल्विदं ब्रह्मेत्यौपनिषदव्यवहारस्तु तस्माज्जातेपि तत्त्वमित्याश्रित्य बोद्धव्यः। अन्यथा वाक्यार्थानुपपत्तिः। अनेकेषु हि सर्वव्यवहारः सर्वसम्मतः। सर्वमिदमित्यस्य दृश्यमानानि सर्वाणीमानि जागतानि वस्तूनि ब्रह्मेत्यर्थः। प्रातिस्विकरूपेण सर्वत्र ब्रह्मव्यवहारे ब्रह्मानेकत्वं प्रसज्येत। किञ्चाद्वैतिनये जगतो मिथ्यात्वे परमार्थाभिधायिन्या श्रुत्या किमभिप्रेत्येदं सर्वमिति ब्रूयात्? विशिष्टाद्वैतिमतेपि शरीरवाचकशब्दानां शरीरिपर्यन्तधावनमितिक्लिष्टकल्पनैव। अतस्तस्माज्जातेपि तत्त्वव्यवहारोनानार्यः। कथं ज्ञायते द्युभ्वादीनामायतनं ब्रह्मेति? स्वशब्दात्=ब्रह्मवाचकशब्दादित्यर्थः। अयमाशयः। वाजसनेयिनः काण्वाश्चाधीयते "तस्मिन्निदं सं

च वि चैति सर्वं स ओतः प्रोतश्च विभूः प्रजासु" (शु०य० ३२।८; काण्वसं०३५।२७) इत्यस्मिन्मन्त्रेऽस्याखिलस्य प्रतीयमानस्य जगत ओतत्वं प्रोतत्वं च तच्छब्दप्रतिपाद्येनाद्ये ब्रह्मण्येव प्रतिपादितम्। "वेनस्तत्पश्यन्निहितं गुहा सद्यत्र विश्वं भवत्येकनीडम्" इति ह्येतन्मन्त्रस्य पूर्वार्धः। अत्र पठितौ तत्सच्छब्दौ ब्रह्मबोधकत्वात्स्वशब्दत्वेनाभिमतौ। विविधं भवतीति विभूः। कार्यरूपेण कारणरूपेण च ब्रह्मैव वैविध्यं लभते नान्यत्। तदेवाभिन्ननिमित्तोपादानकारणं हि विश्वस्य। ननु किमिदं क्वचिज्जगतो मिथ्यात्वमुच्यते क्वचित्तस्यैव मिथ्याभूतस्य जगतो निमित्तोपादानादिकारणान्वेषणा क्रियते क्वचिच्चासत उपादानत्वं प्रतिपाद्यते? आश्चर्यमिदम्! सत्यमाश्चर्यमेवेदम्। सर्वस्मादपि तन्महदाश्चर्यं यस्य ब्रह्मणो विचारः क्रियते। तदित्थमेवेति-सिद्धान्तिते तदियदिति वा सिद्धान्तिते नानन्त्यं तस्य भवेत्। आनन्त्यं त्ववश्यं परिपालनीयं तस्य। अत एवोक्तमृग्वेदे [1]"न हि ते अन्तः शवसः परीणशे" (१।५४।१) [2]"यस्मिन्विश्वा चर्षणय उत च्यौत्ना ज्रयांसि च। अनु घेन्मन्दी मघोनः" (ऋ० ८।२।३३) "यस्मिन्नोताः प्रजा इमाः" (अथ०१०।८।३७,३८)

---

(१) ते तव शवसो बलस्यान्तः परीणशे परितः सर्वतोऽशितुं व्याप्तु न शक्यते। तव बलं परिच्छेत्तुं न कोपि समर्थ इति भावः।

(२) यस्मिन्परमात्मनि विश्वा सर्वाश्चर्षणयः प्रजाश्च्यौत्ना च्यौत्नानि बलानि ज्रयांसि शत्रुविषयाणि हननादीनि च वर्तन्ते। ज्रि अभिभवने। स परमात्मा मघोनो ज्ञानधनवतोऽनु मन्दी अनुमोदकः प्रसादको भवतु। घेत पादपूरकौ।

स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" (शु० य० २३।१) इत्यादिभिरपि सांहितैर्मन्त्रैर्द्युभ्वाद्यायतनं ब्रह्मैवेति बोध्यते। यस्मिन्विश्वेत्यृच इन्द्रो देवता। स एव तत्र स्ववाचकः शब्दः। "यस्मिन्नोताः प्रजा इमाः" इत्यस्यात्मा देवता। स एव तत्र स्ववाचकः शब्दः। याजुषस्य च मन्त्रस्य कस्मा इत्यस्य प्रकृतिभूत आनन्दवाचकः कशब्द एव स्वशब्दः। ननु नायमानन्दवाचकः कशब्दः? कुतो न? सर्वनामकार्यदर्शनात्। न हि तथाभूतः शब्दः सर्वनामकार्यभाग्भवेत्। सत्यम्। आनन्दवाचक एवायं कशब्दः। सर्वनामकार्यं तु च्छान्दसम्। अथवा कस्मा इत्यस्यैकस्मा इत्यर्थः। छान्दसो ह्येकारलोप इति शबरस्वाम्यभिप्रायः ॥१।३।१॥

अत्रैवापरं हेतुं पुरस्करोति—

## मुक्तोपसृप्यव्यपदेशाच्च ॥१।३।२॥

उपसृप्यमुपगन्तव्यं प्राप्यमित्यर्थः। मुक्तैरुपसृप्यं मुक्तोपसृप्यम्। तस्य व्यपदेशस्तस्मात्। चः समुच्चये। मुक्तानामप्युपगन्तव्यं ब्रह्मैवेति व्यपदेशाच्च तद् द्युभ्वाद्यायतनं भवति। द्युभ्वादीत्यत्रादिपदेन मुक्तानां ग्रहणम्। "तमेव विदित्वाति मृत्युमेति" इत्यनेनाज्ञानक्लेशलेशासम्बद्धस्य प्रकाशस्वरूपस्य ब्रह्मणो ज्ञानेनैवोपासकस्य मृत्योरत्ययनमुपदिश्यते। मृत्योरत्ययनमेव ब्रह्मोपसर्पणम्। स च मोक्षः। "ते ह नाकं महिमानं सचन्ते" (शु०य०३१।१६) इतीयं श्रुतिरत्यन्तदुःखविरहितार्थकनाकशब्दबोधितस्य परस्य ब्रह्मणः सेवनमशुश्रुवत्। कं

सुखम् । न कमकं दुःखम् । नाकं यस्मिंस्तन्नाकम् । नाकमित्यत्र नशब्देन समासो न तु नञा । ब्रह्मणि क्लेशलेशाश्लेषप्रतिबोधनायैवेदृशसमासक्लेशः । स्तृतिमृतिरूपा हि महत्य आपदः । ताभ्यः पृथग्भूय स्वरूपावाप्तिपुरस्सरब्राह्मभावानुभवो हि मोक्षः । तादृगनुभववन्तो भाग्यवन्तो हि मुक्ता उच्यन्ते । तेषामुपसृप्यं केवलं सर्वविधानित्यसुखदुःखादिसम्बन्धासम्बद्धं ब्रह्म । यद्यपि ब्रह्मोपसृप्यैव ते मुक्ता भवन्ति, एवं च ये मुक्तास्तेषां नोपसृप्यं ब्रह्म येषां चोपसृप्यं न ते मुक्ता मुमुक्षवो हि ते । तथापि वस्तं वयेतिवत्प्रयोगो मुक्त इति । स्वरूपज्ञानमेव मोक्षोऽविद्यानिवृत्तिरेव वा मोक्ष इति मतं येषां तेषामिदं सूत्रं क्लेशकरमिति त्ववधेयम् ॥१।३।२॥

अन्यस्य द्युभ्वाद्यायतनत्वं निषेधति—

**नानुमानमतच्छब्दात् ॥१।३।३॥**

तस्य वाचकः शब्दस्तच्छब्दः । तच्छब्दस्याभावोऽतच्छब्दं तस्मात् । तच्छब्देनानुमानस्यैव ग्रहणम् । सन्निहितत्वात् । संनिहितपरामर्शित्वमेव सर्वनाम्नाम् । शब्दप्रामाणिकानां विद्वदपश्चिमानां मते मतं हि प्राथम्यं केवलमाप्तशब्दरूपमानस्य । अन्यानि मानानि गौणानि । अत एव तानि सकलान्यनुमानानि भवन्ति । अथवा सर्वप्रथमस्य सांख्यदर्शनस्याभिमतं मूलप्रकृतिरूपं तत्त्वमनुमानसिद्धमितिमत्वा तत्संकेतितस्य प्रधानस्य ग्रहणमनुमानशब्देन । यस्येह ग्रहणाय नास्ति शब्दप्रमाणसंकेतस्तदूद्वयमेव । जडमजडं चेति । अजडं च द्विधा । जीवः

परमात्मा चेति। प्रत्यपाद्येव द्युभ्वाद्यायतनत्वमजडस्य परमात्मनः। अवशिष्टं च जीवरूपमजडम्। जडजीवरूपाजडयोर्द्वयोः पूर्वं ब्रह्मेतरस्य जडस्य द्युभ्वाद्यायतनत्वं निराकरोति—न आनुमानमिति। अनुमानप्रमितमनुमानगम्यं वा जडं द्युभ्वाद्यायतनं भवितुं नार्हति। कुतः? अतच्छब्दात्। न ह्युपर्युपस्थापिते परमाप्ते वेदवचसि जडस्य तथात्वप्रतिपादकः कोपि शब्दः श्रूयते। उपस्थापितवचनभिन्नेष्वप्यन्येषु केषुचिद्वेदवचनेषु नास्ति जडस्य द्युभ्वाद्यायतनत्वप्रतिपादनम्।

नन्वस्त्येव तत्प्रतिपादनम्। क? वेद एव। तथा हि "यस्मिन्विश्वा भुवनानि तस्थुः" (ऋ०७।१०१।४) अस्या ऋचो देवता पर्जन्यः। पर्जन्यो हि जडः। प्रधानकार्यत्वात्पर्जन्येपि प्रधानत्वमुपचरितं स्यात्। तस्मिन्नेव विश्वेषां भुवनानामवस्थितिमाह वेदः। नैतत्। पर्जन्यस्य वर्षणद्वारा सुखमनुभवन्तीनां प्रजानामायतनत्वमुपचारेण न प्राधान्येन। तर्ह्येष मन्त्रः "दिवि सोमो अधि श्रितः" (ऋ०१०।८५।१) इत्यत्र सोमस्याश्रयो द्यौरित्युक्तम्। द्यौरपि प्रधानकार्यत्वात्प्रधानमेव। एषोपि न दोषः। "दिवि सोमो अधि श्रितः" इत्यत्र यस्यां दिवि सोमः श्रितस्तस्या आधारस्तु ब्रह्मैव नान्यः कोपि। एष तर्हि मन्त्रः। "अथो नक्षत्राणामेषामुपस्थे सोम आहितः" (ऋ०१०।८५।२) इति। एषोपि न दोषः। नक्षत्रसहिताया एव दिवो ब्रह्मणा धार्यमाणत्वात्। एष तर्हि मन्त्रः। "सतो बन्धुमसति निरविन्दन्" (ऋ०१०।१२९।४) इत्यत्र सतः विद्यमा-

नस्यास्तित्वमुपगतस्य सर्वस्य पदार्थस्य बन्धुं मित्रमसति प्रधाने प्रधानरूपाश्रये निरविन्दन्महर्षयः। यदि ब्रह्मण एवाश्रयः प्रधानं किमु वक्तव्यं तर्ह्यन्येषाम्? नैष दोष एषोपि। नह्यत्र बन्धुशब्दो मित्रवाचकः। बध्नातीति बन्धुर्बन्धनम्। सतो जीवस्य बन्धनमसति भौतिके जगति निरविन्दन्महर्षय इत्यर्थोऽस्य मन्त्रस्य। भौतिकेषु हि भावेषु भावं भजन्तो जीवा दुःखमेवानुभवन्तीत्यस्य तात्पर्यम्। एवं द्युभ्वाद्यायतनं ब्रह्मैवेति निष्कण्टकम्॥ ॥१।३।३॥

ब्रह्मभिन्नं द्युभ्वाद्यायतनत्वेन संभावितमजडमपि निषेधति—

**प्राणभृच्च ॥१।३।४॥**

चः समुच्चयार्थकः। प्राणान्बिभर्तीति प्राणभृत्। जीवः। जातावेकवचनम्। सांख्यमिव जीवबहुत्ववाद्येवेदं व्यासदर्शनम्। अव्यवहितपूर्वसूत्रान्नेति, अतच्छब्दादिति च पदद्वयमिहापि पदमर्पयतः। जीवस्य जीवयोर्जीवानामपि वा नास्ति द्युभ्वाद्यायतनत्वम्। कुतः? अतच्छब्दादेव। अज्ञानपरम्पराप्रतारितो न कोपि जीवः स्वरूपेणाणीयानल्पबलव्याकुलो द्युभ्वाद्यायतनत्वं सोढुं समर्थः, न वा कोपि ज्ञानविज्ञानप्रकाशराशिप्रकाशित आविर्भूतस्वरूपो मुक्तो जीवः। नास्ति वेदेषु तस्य तथात्वप्रतिपादनम्। कस्मान्नास्ति:? नैतत्प्रष्टव्यम्। स्वतन्त्रो हि भगवान्वेदः। न हि भवति स प्रयोज्योनुयोज्यो वा कस्यचित्कदाचिदपि। स यद्वदति तदेव प्रमाणम्। तदेव सत्यम्। अथवा पृच्छयतां नाम कामम्। उच्यते। असामर्थ्यं हि तस्य द्युभ्वा-

दिधारणे। अणुर्हि जीवः बृहती च द्यौर्भुवादिश्च। न ह्यणुर्जीवोऽनणूनां दिवादीनामायतनं भवितुमर्हति। आश्रितापेक्षयाश्रयेण बृहता भाव्यम्। आश्रयत्वेनाभिमन्यमानो जीवो नास्ति बृहन्। नन्वणुरप्यनणूनां पदार्थानामायतनं भवत्येव। किमुदाहरणम्? अण्वेव कीलकं बृहत्कुम्भकारचक्रस्यायतनम्। अण्व्यामपि नावि बृहत्प्रमाणकानि काष्ठलोहादीनि पदार्थजातानि निधीयन्ते तेन तेषामायतनं भवत्येव सा नौः। अल्पमानमपि साइकिल् सार्धत्रिहस्तपरिमाणं पुरुषं पुरुषद्वयं वा वहति। एवं चाणुरपि जीवो बृहतामपि पदार्थानामायतनं भवितुमर्हत्येव। नार्हति। कुतः? सामर्थ्याभावात्। प्रतिवस्तु हि नियतं सामर्थ्यम्। विशालोऽपि कदलीवृक्षदण्डो न भारवाहाय भवति। भवति चाल्पोऽपि वंशदण्डो भारवहनसाधनम्। अल्पीयस्यपि मृद्घटे सलिलं प्राप्नोति सलीलमालम्बनं न परं महत्यपि कम्बले कार्पासे वा सूक्ष्मसूत्रोतपटपुटे। एवं च यत्राणुन्यपि द्रव्ये विद्यते सामर्थ्यं तद्भवत्येवायतनं स्वापेक्षया महतोऽपि द्रव्यस्य। यत्र च सामर्थ्याभावो न शक्नोति तत्सदपि महद्धारयितुमल्पमपि वस्तु। अणुरेव वा स्याज्जीवो विभुरेव वा, न तेन कश्चिदर्थः। अणीयानपि परमात्मा बृहतीमपि वसुन्धरां बृहन्तमपि सागरं भारालयमपि हिमालयमश्रमं स्वस्मिन्धारयत्येव। किं च "तं त्वा प्रपद्ये तं त्वा प्रविशामि सर्वगुः सर्वपूरुषः सर्वात्मा सर्वतनुः सह यन्मेऽस्ति तेन॥" (अथ०५।६।११) इत्यनेन जीवस्यापि विभुत्वं प्रतिपादितमेव तथापि न जीवो द्युभ्वाद्यायतनम्। सामर्थ्याभावा-

देव। ननु जीवोऽर्हत्येव जगदायतनं भवितुम्। तथा हि वेदे, "अनड्वान्दाधार पृथिवीमुतद्यामनड्वान्दाधारोर्वन्तरिक्षम्। अनड्वान्दाधार प्रदिशः षडुर्वीरनड्वान्विश्वं भुवनमा विवेश॥" (अथ०४।११।१) इत्यनेन मन्त्रेण स्पष्टमेवानुडुहो द्युभ्वाद्यायतनत्वम्। अनः शकटं वहतीत्यनड्वान्। स च प्राणभृदेवेति। सत्यं तथापि न समीचीनम्। न ह्यत्र वृषभस्य वर्णनम्। अत्रान्यदेव हि शकटमन्य एव तस्योढा। तथाहि, ऋग्वेदे शकटस्वरूपनिरूपणमिदं द्रष्टव्यम्—"मनो अस्या अन आसीद् द्यौरासीदुत च्छदिः। शुक्रावनड्वाहावास्तां यदयात्सूर्या गृहम्।" "ऋक्सामाभ्यामभिहितौ गावौ ते सामनावितः। श्रोत्रं ते चक्रे आस्तां दिवि पन्थाश्चराचरः॥" "शुची ते चक्रे यात्या व्यानो अक्ष आहतः। अनो

---

(१) अनड्वान्विश्वशकटनिर्वोढा परमात्मा पृथिवीं भूलोकं द्यां द्युलोकमुरु बृहदन्तरिक्षं षडुर्वीर्महतीः प्रदिशश्च दाधार धारयति विश्वं सकलं भुवनं चाविवेशाविष्ट आविशति च।

(२) अस्या सूर्येतिनामिकायाः परमात्मनः शक्तेर्मन एव रथ आसीदास्ति। तस्या मनोरूपस्य रथस्य द्यौर्द्युलोकश्छदिरुपरिपिधानमासीत्। शुक्रौ दीप्तिमन्तौ सूर्याचन्द्रमसावनड्वाहौ रथस्य वाहकावास्ताम्। यदा सूर्या सा परमात्मशक्तिर्गृहमयात् सृष्टिरूपं गृहं निर्माय यदा तत्प्राविशदित्यर्थः॥१०॥

(३) ते तव ऋक्सामाभ्यामृक्सामे गावौ बलीवर्दावभिहितौ कथितौ इतो गच्छतः। तौ च सामनौ समानमनसौ। श्रोत्रं श्रोत्रे तस्य शकटस्य चक्रे आस्ताम्। दिवि दिव्यलोके हृदयप्रदेशे वा चराचरो गमनागमनसाधनभूतः पन्था आसीत्॥१२॥

(४) यात्या गच्छन्त्याः सर्वं व्याप्नुवत्यास्ते तव शकटस्य शुची पवित्रे चक्रे श्रोत्ररूपे। व्यानो व्यानवायुरक्ष आहतः कथितः आसीत्। पति

मनस्मयं सूर्यारोहत्प्रयती पतिम् ॥" (ऋ० १०।८५।१०-१२) इत्येतद्धि विश्वशकटम्। एतादृशस्य विश्वरथस्य वहनादेव स परमात्मैवानड्वान्नान्यो वृषभादिः। न हि शब्दमात्रं दृष्ट्वा व्यामोह ऊहनीयः। अन्यत्खलु शब्दानां प्रवृत्तिनिमित्तमन्यच्च व्युत्पत्तिनिमित्तमिति ॥१।३।४॥

अन्यमपि हेतुमुपन्यस्यति जीवस्य तत्त्वं वारयितुम्—

## भेदव्यपदेशात् ॥१।३।५॥

भेदोत्र विदलनं विशरणं वा। न तु जीवात्मपरमात्मनोः पार्थक्येन विवरणम्। विदलनं विनाशो विशरणं च। विनाशस्तु शरीराच्छरीरान्तरप्रवेशः। गमनागमने कुर्वाणोस्थिरत्वान्न भवति जीवः कस्याप्यायतनम्। नन्वस्थिर एव स्वाङ्गुल्यग्रभागो भवत्येवास्थिरस्यैव भ्रमतश्चक्रस्यायतनमिति। सत्यम्। अस्थिरता च नेह कम्पनरूपा। शरीराच्छरीरान्तरप्रवेशरूपैव सेत्यधुनैवाबूबुधाम। एवंविधस्य भेदस्य व्यपदेशस्तु [1]"अभि त्वा

---

पालकं हृदये स्थापयितारं भक्तगणं प्रयती गच्छन्ती सा सूर्या भगवच्छक्तिर्मनस्मयं मनोमयमनो रथमारोहत् ॥ जीवानां मनोरूपं रथमारुह्य सा सूर्या परमात्मनः काचन शक्तिर्यदा स्वपालकं हृदयेन स्वधारकं भक्तगणं प्रति गच्छति भक्तेषु जगत्सु च यदा स व्याप्नोति तदा तस्य शकटस्य मन्त्रोक्ता अवयवा आसन्निति भाव ॥१२॥

(१) रज्ज्वा गामुक्षणमुक्षाणं चेव जरिमा वार्धक्यं त्वा त्वामभि आहित अबध्नात्। यो मृत्युर्जायमानं सन्तमेव त्वा त्वां सुपाशया महाजालेन अभ्यधत्ताबध्नात्। ते तव तं मृत्युपाशं सत्यस्य हस्ताभ्यां त्वया सेवितं सत्यं द्वारीकृत्येत्यर्थः, बृहस्पतिर्बृहतां पतिः परमात्मा उदमुञ्चन्मोचयति।

जरिमाहित गामुक्षणमिव रज्ज्वा। यस्त्वा मृत्युरभ्यधत्त जायमानं सुपाशया। तं ते सत्यस्य हस्ताभ्यामुदमुञ्चद्बृहस्पतिः॥ (अथ० ३।११।८) "जरायै त्वा परिददामि जरायै नि [1]धुवामि त्वा०" (अथ० ३।११।७) [2]"शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान्।" (अथ० ३।११।४) [3]"जरा मृत्यवे परि नो ददातु" (अथ० १२।३।५५) [4]"योस्मान्द्वेष्टि यं च वयं द्विष्मस्तं वो जम्भे दध्मः" (अथ० ३।२७।१) इत्यादिषु मन्त्रेषु द्रष्टव्यः॥१।३।५॥

अन्तिमं हेतुमुपन्यस्यति—

## प्रकरणात्॥१।३।६॥

प्रकरणं हि यस्य कस्याप्यपेक्षया शब्दार्थनिर्णये सर्वोपरि निर्णायकत्वं भजते। सैन्धवमानयेत्युक्ते प्रकरणादेव परिज्ञायते लवणमित्यश्व इति वानेयः। प्रकरणादेव परिज्ञायत एकरूपो गुणः सत्त्वादिरूपो वा। यत्र द्युभ्वादिसर्ववस्त्वायतनत्वस्य विचारस्तत्र ब्रह्मैव प्रस्तुतं न जीवः। तथाहि, [5]"सुप्रजाः सन्त्स उदारे न सर्षद् यो नाश्नीयादनडुहो विजानन्" (अथ० ४।

(१) नि धुवामि प्रापयामि।

(२, ३, ४) निगदव्याख्याताः।

(५) यो जनोनडुहो भगवतः स्वरूपं विजानन् नाश्नाति जागतिकं विषयभोगं नानुभवति स सुप्रजाः शोभनप्रजादिमान् सन् आरे दूरे परमात्मन इति भावः, न सर्षत्र गच्छति। अथवा उदारे इत्येकं पदम्। उदरे इत्यर्थः। सांहितिको दीर्घः। जनन्या उदरे न पुनर्गच्छतीत्याशयः।

११।३) इत्यस्मिन्मन्त्रेनडुज्ज्ञानवतो न पुनः संसरणापसरणं श्रूयते। "[1]यो वेदानडुहो दोहान्सप्तानुपदस्वतः। प्रजां च लोकं चाप्नोति तथा सप्तऋषयो विदुः॥" (अथ० ४।११।९) इत्यस्मिन्मन्त्रेनडुहो विनाशाभावं भावयति भगवती श्रुतिः। इदं सर्वं न कथमपि हलवाहके वृषभे घटते। एवम् "उक्षा स द्यावापृथिवी बिभर्ति" (ऋ० १०।३१।८) इत्यपि ज्ञेयम्। अतः प्रकरणादवगम्यते नात्र प्राणभृद् द्युभ्वाद्यायतनमिति ॥१।३।६॥

उपोद्बलकं हेतुमुपन्यस्य समापयत्यधिकरणम्—

## स्थित्यदनाभ्यां च ॥१।३।७॥

स्थिती रक्षणम्। अदनं भक्षणं विनाशनं प्रलय इतियावत्। न हि परं ब्रह्म केवलं द्युभ्वादीनामनारतमनार्तमायतनमपि तु तेषां रक्षणप्रलयावपि विदधाति। तथाहि, "प्राची दिगग्निरधिपतिरसितो रक्षितादित्या इषवः।" (अथ० ३।२७।१) इत्यस्मिन्मन्त्रे जगतो रक्षितृत्वं ब्रह्मण्येव प्रत्यपद्यत। "नमोऽग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च" (शु०य० १६।४०)

(१) योनुपदस्वतोविनश्यतोनडुहः परमात्मनः सप्त दोहान्दोहनपात्राणि वेद जानाति स प्रजा लोकं पारमेश्वरं चाप्नोति। सप्त ऋषयस्तथा विदुर्जानन्ति। दोहनपात्रं दुग्धस्थापनपात्रम्। यस्मिन्पात्रे दुग्धरूपं तत्त्वं निधीयते तद्दोहनपात्रमुच्यते। परमात्मा किं दोग्धि कुतो दोग्धि कुत्र च दोग्धीति विचारणीयम्। भौमेषु भोगेषु पारमेश्वराः पुत्रा अस्तं गताः। तेभ्य एव तान् स दोग्धि समाकृष्य बहिर्निस्सारयति। निस्सार्य च ततस्तान्यत्र स्थापयति तानि विवेकशमदमोपरतितितिक्षाश्रद्धासमाधानेत्याख्यानि सप्त पात्राणि सन्ति। सप्त ऋषयश्च पञ्च ज्ञानेन्द्रियाणि मनो बुद्धिश्चेति।

इत्यादौ जगत्प्रलयकर्तृत्वमपि तस्मिन्नेव समार्तिथपत। रक्षण-प्रलयक्रिययोरपि न शक्यत आनुमानं प्राणभृद्वा कर्तृत्वेन निर्देष्टुम्। परं ब्रह्म तु निर्विवादं तयोः क्रिययोः कर्त्रिति तदेव जगदायतनम्। किं च द्युभ्वादिशब्देन विश्वमेव विश्वं विवक्षितम्। विश्वान्तःपातिनावेवानुमानप्राणभृतौ। एवं च तयोरेवाधारत्वमाधेयत्वं च विरुद्धम्। न हि स्वस्य स्वमाधारो भवति। एवं च सुतरां सिद्धं द्युभ्वाद्यायतनं ब्रह्मैवेति ॥१।३।७॥ इति द्युभ्वाद्यधिकरणम् ॥१॥

(अथ भूमाधिकरणम् ॥२॥)

ब्रह्मणः परिमाणमभिमतं समर्थयते—

## भूमा सम्प्रसादादध्युपदेशात् ॥१।३।८॥

अन्यत्र भूमा बहुत्वरूपार्थे सिद्धः। अत्र तु वैपुल्यार्थकः। ब्रह्मापरपर्यायः स परमात्मा भूमा विपुलो विभुपरिमाणोवगन्तव्यः। प्रतिरजःकणमणीयस्तया प्रतिगिरं महीयस्तया च स व्याप्यावतिष्ठत इत्यर्थः। अत्र हेतुः सम्प्रसादादिति। "कं भुवनानामभिश्रीः" इत्यादिवेदवचोभिरानन्दस्वरूपता तस्यैव सिद्धा नान्यस्य। तत्प्रसादादेवान्ये जीवाः प्रसादवन्तो भवन्ति। यदि स भूमा न स्यात्सर्वत्र तस्य व्याप्तिर्न स्यात्। व्याप्त्याभावाद्यौगपद्येन प्रसादमभिलषतो जीवान् स प्रसादयितुमसमर्थ एव स्यात्। सम्प्रसादयतीति सम्प्रसाद इति तस्य व्युत्पत्तिः। अपरमाह हेतुम्। अध्युपदेशादिति। अधिक उपदेशोऽध्युपदेशस्तस्मात्। अध्युपदेशो हि वेदोपदेशः। वेदोपदेशोपि तथाविध एव।

तथाहि, "अग्निर्देवेषु संवसुः स विक्षु यज्ञियास्वा। स मुदा काव्या पुरु विश्वं भूमेव पुष्यति देवो देवेषु यज्ञियो नभन्तामन्यके समे ॥" (ऋ०८।३९।७) इति। अस्यार्थः, अग्निः प्रकाशस्वरूपः परमात्मा देवेषु सत्पुरुषेषु संवसुर्निवासशीलः। यज्ञियासूत्कृष्टकर्मयोग्यतावतीसु सुसंस्कारसम्पन्नासु विक्षु प्रजासु चा आ समन्तात् संवसुः। स भूमाग्निः व्यापकः परमात्मा काव्या काव्यानि स्तुतिवचांसि श्रुत्वेतिशेषः, मुदा मोदेन पुरु महद्विश्वं जगत् पुष्यति पुष्णाति। देवेषु मध्ये यज्ञियः सत्कर्मप्रसाद्यः स देवः। तत्प्रसादादन्यके परे शत्रवः समे सर्वे नभन्तां हिंस्यन्ताम्। णभ हिंसायाम्। भूम सदेव तद्ब्रह्म परमानन्दप्रदानेन जगत्पुष्णातीतिवेदवचनेनोपदिश्यते ॥१।३।८॥

तत्रैवापरं हेतुमाह—

## धर्मोपपत्तेश्च ॥१।३।९॥

धर्मस्योपपत्तिधर्मोपपत्तिः। चः समुच्चये। "अकामो धीरः अमृतः स्वयम्भूः (अथ० १०।८।४४) "यस्मिन्नोताः प्रजा इमाः" (अथ० १०।८।३७–३८) "प्रजापतिश्चरति गर्भे अन्तरजायमानः" (अथ० १०।८।१३) "रूपंरूपं प्रतिरूपो बभूव" (ऋ० ६।४७।१८) इत्यादिषु मन्त्रेषु समाम्नाता अमृतत्वाकामत्वधीरत्वस्वयम्भूत्वसर्वगर्भचरणशीलत्वसर्वरूपभवनत्वादयो धर्मा अपि तदानीमेवोपपद्येरन्यदि स्यात्तद्ब्रह्म भूमेति ॥ १ । ३ । ९ ॥ इति-भूमाधिकरणम् ॥२॥

(अथाक्षराधिकरणम् ॥३॥)

ब्रह्मणोऽविनाशित्वमुपपादयितुमाह—

## अक्षरमम्बरान्तधृतेः ॥१।३।१०॥

तद्ब्रह्माक्षरमविनाशीति। जन्यं हि सकलं महाकालकवलितं भवति। यदि ब्रह्मापि क्षरमेव स्यादकिञ्चित्करमेव तत्स्यात्। "स दाधार पृथिवीम्" इत्यादिश्रुतिश्रुतं सर्वधारकत्वादि निराधारमेव स्यात्। तस्याक्षरत्वे हेतुमाह—अम्बरान्तधृतेरिति। अम्बरमन्तो येषां तेऽम्बरान्ताः क्षित्यबनलानिलाकाशाः सर्व एव पाञ्चभौतिकाः पदार्थाः। तेषां धृतेर्धारणात्। यदि तदक्षरं न स्यान्न स्यात्समेषां क्षराणामक्षराणां च धारकम्। न ह्यन्धोऽन्धं सुपन्थानं नयति। "ऋचोऽक्षरे परमे व्योमन्" इत्यादावप्यक्षरमेव परं ब्रह्मेति ॥१।३।१०॥

अम्बरान्तधृतिं वेदमुखेन प्रतिपादयितुमाह—

## सा च प्रशासनात् ॥१।३।११॥

कुतोऽवगम्यतेऽम्बरान्तधृतिर्ब्रह्मणा सम्पाद्यत इति? प्रशासनात्। प्रकृष्टं शासनं प्रशासनम्। अप्रतिहतानुशासनमित्यर्थः। ब्रह्माम्बरान्तान्निखिलान्पदार्थाञ्शास्ति स्वानुशासने स्थापयतीत्येतादृशं प्रशासनमुपलभ्यते। तथा हि, "यस्य विश्व उपासते प्रशिषं यस्य देवाः" (ऋ०१०।१२१।२) "य ईशे अस्य द्विपदश्चतुष्पदः" (ऋ०१०।१२१।३) "युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना" (ऋ०१।११२।३) "विद्वाँ अस्य प्रशासनम्" (ऋ०८।७२।१) "यां देवा अनु-

तिष्ठन्ति यस्या नास्ति विराधनम्। तयेन्द्रो हन्तु वृत्रहा वज्रेण त्रिषन्धिना॥" (अथ० ११।१०।२७) "तस्येमे सर्वे यातव उप प्रशिषमासते" (अथ० १३।४।२७) "तस्यामू सर्वा नक्षत्रा वशे चन्द्रमसा सह।" (अथ० १३।४।२८) इत्यादिभिर्दृष्टश्रुतश्रौतप्रवाहैः सर्वेषु जागतिकेषु वस्तुषु परमात्मनोऽप्रतिहतानुशासनं प्रवर्तत इति स्पष्टम्। तद्ब्रह्म सर्वं प्रशास्ति। धृतिमन्तरेण च प्रशासनस्यासंभवात्तत्राम्बरान्तधृतिः सुतरां स्वयमेव सिध्यति ॥१।३।११॥

चरमं हेतुमुपन्यस्यति—

## अन्यभावव्यावृत्तेश्च ॥१।३।१२॥

अन्येषां भावोऽन्यभावः। तस्य व्यावृत्तिर्निराकरणम्। तस्याः। अक्षरशब्दवाच्यत्वं वर्णस्यापि जीवस्यापि प्रकृतेरपि। "अक्षरेण मिमते सप्त वाणीः" (ऋ० १।१६४।२४) इत्यत्र वर्णवाचकत्वमक्षरस्य। "उषसः पूर्वा अध यद्व्यूषुर्महद्वि जज्ञे अक्षरं पदे गोः।" (ऋ० ३।५५।१) इत्यत्र जीववाचकोऽक्षर शब्दः। पूर्वाः प्राचीना उषसः यद् यदा व्युषुर्व्यपगता भवन्ति अध अथ—यदा च पुनः सर्गारम्भो भवति तदा गोः पृथिव्याः पदे स्थाने महदक्षरं जीवो विजज्ञे प्रादुर्भवतीत्यस्या ऋचोऽर्थः। "गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे" (ऋ० ६।१६।३५) इत्यत्राक्षरशब्दः प्रकृतिवाचकः। मातुः [1]पृथिव्या अक्षरे गर्भे इति वर्णनात्पृथिव्याः प्राकृतत्वात्तद्गर्भोऽपि प्राकृत एव। प्राकृतो न

(१) द्यौर्वः पिता पृथिवी माता (ऋ० १।१९१।६) इति मन्त्रो द्रष्टव्यः।

प्रकृतितो भिद्यते। प्रकृतिभूतस्य गर्भस्यैव विशेषणमक्षर इति। एवं च सर्वेषां ¹वर्णजीवाचितां भावस्य सत्त्वस्य व्यावर्तनादक्षरशब्दवाच्यत्वं ब्रह्मण एव। नन्वस्य विश्लेषणस्य कावश्यकतापतिता? आपतितैवावश्यकता। "ऋचो अक्षरे परमे व्योमन्" इत्युक्तम्। तत्राक्षरशब्दस्य ब्रह्मवाचकत्वं स्थिरीकर्तुमेषोऽशेषः प्रयत्नः। यदि न तत्र विवादस्तर्हि मास्त्वेष प्रयासोऽपि। सूत्रार्थस्तु तदेत्थम्—अन्येषां भावानां व्यावृत्तिर्निराकृतिर्दूरप्रक्षेपणं विनाशो भवति नातस्तेऽक्षराः। ब्रह्मणस्तु व्यावृत्तेरभावादक्षरत्वमिति ॥१।३।१२॥ इत्यक्षराधिकरणम् ॥३॥

( अथेक्षतिकर्माधिकरणम् ॥४॥ )

सिंहावलोकनं करोति—

## ईक्षतिकर्मव्यपदेशात्सः ॥१।३।१३॥

अतो ब्रह्मजिज्ञासेति हि प्रथमेन सूत्रेण प्रतिश्रुतम्। अद्यावधि तल्लक्षणं तत्स्वरूपं तद्व्यवहारं तद्धर्मं चोपादिक्षद्व्यचीचरच्चाचार्यः। इदानीमनुयुङ्क्ते पूर्वपक्षी कथं ब्रह्मैव जिज्ञास्यं नान्यत्किञ्चिदिति? ब्रह्मजिज्ञासेत्यत्र जिज्ञासा हि विचार इति पूर्वमेवावोचाम। तत्र पूर्वपक्षिणोऽयमाशयः—बहवः सन्त्यपरेऽपि

(१) ननु "ओ३म् क्रतो स्मर" (शु०य०४०।) इत्यत्रोमित्यक्षरोपासना श्रूयते। ओङ्कारश्च वर्णसमूह एव। कथं तर्हि वर्णस्याक्षरपरमात्मवाचकत्वं प्रतिषिध्यत इति चेच्छृणु। यश्चोपासनीय ओमिति न स वर्णसमूहः किन्तु वर्णसमूहेन यथाकथञ्चिद्बोध्यश्च। न ह्यकारोकारमकारादिमान्समूहः केनाप्युपासकेनोपास्यते। यमर्थमयं समूह उपलक्षयति तमेव परमात्मानमुपासते सततमुपासका इति।

परामर्शार्हाः पदार्थाः कथं तर्हि परमात्मन्येव पक्षपातः ? कथं न मुमुक्षुभिर्जीवविचार एवाचरणीयः ? कथं न वाचिच्चिन्तनीया ? चिदचिदीश्वरेष्वचिद्धि प्रत्यक्षतमा ? प्रत्यक्षतरा हि चित् । अप्रत्यक्षतमो हीश्वरः । प्रत्यक्षतरं प्रत्यक्षतमं च वस्तु विहायाप्रत्यक्षतमे पुरुषोत्तमे जिज्ञासायाः को हि महानवसरः ? चिदचितोर्ज्ञानं मोक्षपरिपन्थित्वेनाभिमतं चेत्तथापि न क्षतिः । परिपन्थिस्वरूपानुसन्धानेनापि स्यादेवाज्ञानग्रन्थिनिर्भर्त्सनम् । उच्यते । अचिद्विचारेण केवलं भौतिकविज्ञानसम्पत्तिः सिध्येन्नान्यत्किञ्चित् । तया च सम्पदा न जीवः कल्याणपदे पदमर्पयितुमपि शक्नोति । यद्धि विचार्यं ताद्रूप्यमेव चित्तस्य । अचितश्चिन्तनेनाचित्त्वमुपचिन्वच्चित्तं न कमपि महिमानमश्नुवीत । चितश्चिन्तनं तु परमेश्वरचिन्तनान्वगेवेति सर्व एवानुभविनः । एवं च परिशेषाद्ब्रह्मचिन्तनमेव कर्तव्यमित्यायातम् । किं च नापरोक्षः परमात्मेति विपश्चितां प्राचामर्वाचां च वाग्व्यवहारः । अप्राप्तमेव प्राप्तुं प्रापयितुं च दयार्द्रचेतसां परममहसां विदुषामायासः । परमात्मदर्शनेनैवादर्शनतां भजते भवपुनर्भवभाव इति तेषामनुभूतिरहस्यम् । अत्रैव वेदानामपि तात्पर्यमिति विशदयितुं सूत्रमिदम् । ईक्षतिर्दर्शनम् । दर्शनं तु ज्ञानमेव न चर्मचक्षुषावलोकनम् । ईक्षतेः कर्मेक्षतिकर्म । तत्त्वेन व्यपदेश ईक्षतिकर्मव्यपदेशस्तस्मात् । उपासकानां तस्मिन् परमात्मन्येव दर्शनकर्मताव्यवहारः । सम्यग्द्रष्टारो हि तमेव पश्यन्ति । तदद्रष्टारश्च तमेव दिदृक्षन्ते । पूर्वजाश्च तमेवाद्राक्षुरभाक्षुश्च श्रेयो निश्श्रे-

यसं च। तथा हि श्रुतयः, [1]"धीरासः पदं कवयो नयन्ति नाना हृदा रक्षमाणा अजुर्यम्। सिषासन्तः पर्यपश्यन्त सिन्धुमाविरेभ्यो अभवत्सूर्यो नॄन्॥" (ऋ०१।१४६।४) [2]"तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते। तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः॥" (अथ०१०।२।३२) "उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥" (शु०य०२०।२१) "उद्वयं तमसस्परि रोहन्तो नाकमुत्तमम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥" (अथ०७।५८।७) इत्यादिषु सर्वत्रैव परमात्मन्येवेक्षतिकर्मव्यपदेशः। अतः स एव जिज्ञास्यो नान्यः॥१।३।११॥ इतीक्षतिकर्माधिकरणम्॥४॥

(अथ दहराधिकरणम्॥५॥)

"भूमा सम्प्रसादाद्०" इत्यादिना परमात्मनो विभुत्वम्

---

(१) धीरासो धीरा धीमन्तः कवयः क्रान्तदर्शिनः सर्वज्ञा वा नाना नानिति न प्राणिति भगवद्विरोधिषु पदार्थेषु या सा नान् तया नाना परमात्मलीमया हृदा बुद्ध्या रक्षणा रक्ष्यमाणाः सिन्धुं स्यन्दमानं भक्तिजलं सिषासन्तः संभक्तुमिच्छन्तो जीवान् सांसारिकान् पर्यपश्यन्त परितोपश्यन् पश्यन्ति ततः परं तानजुर्यमविनाशि पदं नयन्ति प्रापयन्ति। एभ्यस्तेभ्य इत्यर्थः, नॄन् नृभ्यः सूर्यः सर्वत्रसरणशीलः सलीलः परमात्मा आविरभवत् आविर्भवतीति भावः।

(२) अरे अरत्रयसंयुक्ते त्रिप्रतिष्ठिते त्रिषु अनन्यभक्तिः परमात्मविज्ञानं परमात्मविषयकं च कर्मेत्येतेषु त्रिषु प्रतिष्ठिते हिरण्यये हिरण्मये परमसुन्दरे बहुमूल्ये कोशे शरीरे आत्मन्वत् आत्मवान् यद्यक्षं यो यक्षः पूजनीयः परमात्मा तिष्ठति ब्रह्मविदो ब्रह्मज्ञानिनस्तमेव ब्रह्म विदुः। मनोवचःकर्माणीति त्रयोराः। एभिरेव शरीरतद्व्यवहारयोः स्थितिः।

"अक्षरमम्बरान्त०" इत्यादिना चाविनाशित्वं प्रतिपादितमसहमान आह पूर्वपक्षी—

## दहर उत्तरेभ्यः ॥१।१४॥

दहर इत्यल्पार्थकः शब्दः। निघण्टौ दहरक इति काचित्कः पाठो दहेरक इत्यपि च। स परमात्मा दहरोल्पो ह्रस्वो न तु विभुर्न वाक्षरः। ह्रस्वो ह्यनक्षरो भवति। लोके तथैव दर्शनात्। परमात्मनो दहरत्वे हेतुमाह—उत्तरेभ्य इति। उत्तरेभ्यो वक्ष्यमाणेभ्यो हेतुभ्यः ॥१।३।१४॥

उत्तरेभ्य इति प्रतिज्ञातान्हेतूनाह—

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥१।३।१५॥

गतिश्च शब्दश्च तौ, ताभ्याम्। गतिशब्देन गमनाद्याः सर्वाः क्रियाः समाह्रियन्ते। परमात्मनो गतिः श्रूयते "स पर्यगात्" (शु०य०४०। ) "इन्द्रो मंदाय गच्छति" (ऋ० १।१६।८) इत्यादिषु वेदमन्त्रेषु। लोकेपि प्रसिद्धिः शरणागतानां दुःखं संजिहीर्षुः स समभ्युपैति। शब्दश्च। ब्रह्मदहरत्वे शब्दप्रमाणमपि भवति। तथाहि "द्वा सुपर्णा सयुजा सखाया" इत्यनेन मन्त्रेण जीवब्रह्मणोः सामानधिकरण्यं शब्द्यते। यस्मिन्नधिकरणे जीवस्य निवेशस्तस्मिन्नेव परमात्मनोपि। परिष्वज्यमानो द्वाभ्यां वृक्षस्त्वणुरेव। तथाहि दृष्टमिति। लोकेपि दृष्टं भवत्यणुन्यधिकरणेल्प एव तिष्ठति न विभुरिति। लिङ्गं च गमकमपि परमात्मनो दहरत्वे यद्भवति तत्प्रदर्शितं द्वा सुप-

णैत्यादिना । अन्यान्यपि लिङ्गानि नानतिप्रसिद्धानि । ततो दहरः परमात्मेति ॥१।३।१५॥

किं च,

## धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः ॥१।३।१६॥

धृतेर्धारणाच्चाप्यस्य परमात्मनो माहात्म्यस्यास्मिन्दहर एवोपलब्धेः । तथाहि वसुन्धरा नियतपरिमाणा सत्येव सर्वं धारयति । भूधरोपि सततमवगतपरिमाण एव भुवं धारयति । जीवोप्यल्पपरिमाण एव देहं धारयति । एवं च धारणादपि स परमात्मा दहरो ह्रस्व एव । ह्रस्वेपि धारणादिकं तस्य माहात्म्यमुपलभ्यते ॥१।३।१६॥

किं च,

## प्रसिद्धेश्च ॥१।३।१७॥

"प्रजापतिश्चरति गर्भेऽन्तरजायमानो बहुधा विजायते" (शु०य०३१।१९) इति गर्भे चरणस्य बहुधा भवनस्य च प्रसिद्धेर्दहर एव स न च विभुः ॥१।३।१७॥

किं च,

## इतरपरामर्शात्स, इति चेन्नासम्भवात् ॥१।३।१८॥

इतरस्य प्रधानस्याज्ञानस्य वा परामर्शात्साहाय्ययाचनात्स परमात्मा दहर एव । न हि परमात्मा जगन्निमार्णे शक्तो भवेन्न भवेद्यदि प्रकृतिरचेतना कर्तृत्वसंचारयित्री वाविद्या तस्मिन् । ततः स दहर एव । सर्वान् हेतून् निराकरिष्यन्नाह–इति चेत्

नेति। कुतो न? असम्भवात्। यदि परमात्मा निर्गुणं भवेत्तदुक्तधर्माणां तस्मिन्नसंभव एव स्यात्। "स दाधार पृथिवीं द्यामुतेमाम्" इत्युक्तम्। न हि कश्चनाल्पो महतीमिमां धरामकल्पनीयप्रमाणां द्यां च धारयितुं शक्नोति। गतिशब्दाभ्यामिति यदुक्तं तदपि न। असम्भवादेव। "स पर्यगाद्" इति हि प्रोक्तम्। पर्ययणं च व्याप्तिः। विभुरेव सर्वं व्याप्तुं शक्नोति नाणुः। "भुवनानि पश्यन्" इत्युक्तं सर्वेषां भुवनानां दर्शनमविभोरसम्भवः। यानायाने च वर्ण्यमाने तस्य गौणे एव। मुख्ययोर्यानायानयोरसम्भवात्तस्मिन्। "प्रजापतिश्चरति गर्भे" इत्युक्तमजायमानस्यापि परमात्मनो बहुधा जायमानत्वं नाल्पे तस्मिन् संभवति। महदाश्चर्यमेतद्यदजायमानोपि नैकधैव किन्तु बहुधा विजायते। किं च तस्य गर्भे चरणं न लोकप्रसिद्धम्। गर्भ इत्यत्राधारद्योतिकया सप्तम्यैवाधारलाभः स्याद्यदि केवलमाधारविवक्षा स्यात्। उच्यते चान्तरिति। गर्भेन्तश्चरणमन्तर्यामित्वं तस्य प्रख्यापयति। तच्च विभावेव सम्भवति नाल्पे कथमपि। यदुक्तमितरपरामर्शादिति तदपि न युक्तम्। इतरस्य परामर्शो नाल्पस्य कार्यं, विभोरेव। न हि परमात्मा जगन्निर्माणे शक्तो भवेन्न भवेद्यदि प्रकृतिश्चेतना सहकारिणीत्युक्तिरसद्युक्तिः। यदा स जगतस्तस्थुश्चापीष्टे—ईशानो भवति यदा च सर्वं तस्य शरीरमेव भवति तदा कोऽवसरस्तस्याः प्रकृतेरभवनस्य? न चाविद्या तत्र कर्तृत्वं संचारयति। सवर्थापरवान्हि परमात्मा। अकामो धीरः अमृतः

१०

स्वयम्भूरिति वेदेनैव प्रतिपादितम्। स्वयमात्मना जगद्भावयतीति स्वयम्भूः। सर्वत्र सर्वक्रियासंचारयितरि पितरि परमात्मनि क्रियां संचारयितुं कथं नामाविद्या वराकी प्रभवेत्? नातः स परमात्माल्पः ॥१।३।१८॥

पुनराशङ्कते—

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१।३।१९॥

उत्तरादुत्तरशब्दपाठादल्पत्वं चेत्, आविर्भूतस्वरूपः सः। अयमाशयः। "उद् वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ (ऋ०१।५०।१०) इत्यस्मिन्मन्त्र उत्तरस्य ज्योतिष उत्तमस्य च ज्योतिषोधिगतिरुक्ता। ज्ञायते चैतेन तारतम्यं परमात्मनः। यश्चोत्तरः परमात्मा सोल्पो नोत्तम इति चेदुच्यते, तदुत्तरं शृणु। आविर्भूतस्वरूप इति। आविर्भूतं स्वरूपं यस्य स आविर्भूतस्वरूपः। परमात्मा सर्वदैवाविर्भूतस्वरूपत्वान्मायाच्छायाविरहितत्वाच्चोत्तम एव। पूर्वार्धर्चे श्रुतश्चोत्तरशब्दो नोत्तमशब्दाद्भिद्यते। अत एव आथर्वणा उभयत्रोत्तमशब्दमेवाधीयते। तथाहि "उद्वयं तमसस्परि रोहन्तो नाकमुत्तमम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥" (अथ०७।५३।७) इति। अथवा तमसोज्ञानात्परि परस्तादज्ञानमतीत्येत्यर्थः, उत्तरमुत्कृष्टं ज्योति-

(१) वयमुपासकास्तमस अविद्यायाः पापाद्वा परि उपरि वर्तमानं पापादिरहितमुत्तरमुत्कृष्टतरं ज्योतिः पश्यन्तो देवत्रा देवेषु देवं दिव्यं सूर्यं प्रकाशकमुत्तममुत्कृष्टतमं ज्योतिरगन्म प्राप्नवाम।

ज्ञीनं पश्यन्तो वयं सूर्यं प्रकाशस्वरूपमुत्तमं देवं परमात्मानमगन्म प्राप्तवन्त इत्यर्थकरणात्तस्य मन्त्रस्य तारतम्यं सर्वथा समे परमेश्वरे मा वि भात् । अस्य मन्त्रस्योत्तरार्धपाठो वाजसनेयिनां तैत्तिरीयाणां चेदृशः—"उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्" (शु०य०२०।२१; तै०४।१।७।४) इति । सूत्रान्ते तु-वैषम्यशमनार्थः ॥१।३।१९॥

इतरपरामर्शादितिसूत्रोक्तं परामर्शं परामृशति—

## अन्यार्थश्च परामर्शः ॥१।३।२०॥

"धमति सं पतत्रैः" इत्यादौ य इतरपरामर्शः श्रूयते स चान्यार्थः । अन्येल्पज्ञानिनोज्ञानिनो वा । कथं केन च साधनेन परमात्मा जगदिदमागमयतीति जिज्ञासूनामज्ञानिनां सन्तोषाय साधनपरामर्शः । यन्नाह्वि साधनं सर्वं तस्य तच्छरीरम् । शरीरशरीरिणोश्चाभेद इति स्वेनैव सर्वं सन्तनुते परमात्मा ॥१।३।२०॥

पुनरपि कुचोद्यं चोदयति—

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥१।३।२१॥

ननु गतिशब्दाभ्यां तथेत्यादिसूत्रे गतिशब्दाभ्यामल्पत्वं परमात्मनः समर्थितमिति चेत्, तद् उक्तम् । तस्योत्तरम् "इतरपरामर्शात्स इति चेन्नासम्भवात्" इतिसूत्रेणोक्तं तत्रैव द्रष्टव्यम् ॥१।३।२१॥

महौषधं महारोगिणे प्रयच्छति—

## अनुकृतेस्तस्य च ॥१।३।२२॥

यत्र क्वचिद्यद्यल्पश्रुतिः स्यात्सा तस्य परमात्मनोऽनुकृतेर्वै-

दितव्या। अयं भावः। सूर्याग्निवाय्वादयः शब्दा लौकिकसूर्ये लौकिकाग्नौ लौकिकवाय्वादौ चापि प्रयुक्ताः परमात्मनि चापि। "अग्न आ याहि" इत्यादौ यत्रागमनश्रवणेनाग्नेरल्पत्वं प्रतीयेत तत्र परमात्मनोऽनुकृतेरग्न्यादेर्बोध्यम्। प्राधान्येन परमात्मन एवोपासा शास्त्रसिद्धा। तथाप्यसमर्थाः परमात्मप्रतीकबुद्ध्याग्न्यादित्यादीनुपासीनास्तत्तद्देवादीनामागतिं प्रार्थयन्ते। तत्र सर्वत्र परमात्मनस्तद्धर्माणां चानुकृतिर्बोध्येति भावः ॥१।३।२२॥

अत्रैव स्मृतिं प्रमाणयति—

## अपि च स्मर्यते ॥१।३।२३॥

स्मृतिरप्येतादृश्येव। का सा? एषासौ "गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः। गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः॥" इत्यत्र गुरौ विष्ण्वादीनामनुकृतिर्बोद्धव्या ॥१।३।२३॥ इतिदहराधिकरणम् ॥५॥

(अथ प्रमिताधिकरणम् ॥६॥)

पुनराक्षिपति—

## शब्दादेव प्रमितः ॥१।३।२४॥

येषां वेदानां शब्दमाश्रित्य परमात्मनो विभुत्वं प्रतिपाद्यते तेषामेव वेदानां शब्दात्स परमात्मा प्रमितः प्रकर्षेण मितः। स च शब्दः "अत्यतिष्ठद्दशाङ्गुलम्" (शु०य०३१।१; अथ०१९। ६।१, ऋ०१०।९०।१) इति। ज्ञायते चैतेन दशाङ्गुलपरिमाणः स परमात्माल्प एवेति।

समाधत्ते—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥१।३।२५॥

अप्रमितस्यापि ब्रह्मणो दशाङ्गुलमितिदर्शनेन दशाङ्गुलपरिमाणकल्पनं न युक्तम् । तद्ध्यायिभिर्हृदयप्रदेश एव तद्ध्यायत इतिविद्वत्प्रवादः । स च प्रदेशोऽत्यल्पः । तत्प्रदेशाल्पत्वं तत्र ध्येये ब्रह्मण्यपि प्रकल्पितम् । एवं च हृद्यपेक्षयैव दशाङ्गुलपरिमाणत्वप्रतिपादनं तस्य । किं च शब्दतस्तु तस्य दशाङ्गुलत्वमपि न प्रतीयते । दशाङ्गुलं हृदयमतिक्रम्यातिष्ठदित्येव तस्यार्थः । यद्यदाक्रम्य तिष्ठति तत्तत्परिमाणमेव भवतीति न नियमः । भुवमाक्रम्य स्थिता भूधरा न भूपरिमाणाः। मूषकमाक्रम्य स्थितो बिडालो न मूषकपरिमाणः। आक्रम्यपरिमाणेनाक्रान्तृपरिमाणस्य न कोपि सम्बन्धः । न्यौन्यमेव वाधिक्यमेव वा भवति परिमाणस्याक्रामकस्य । हृद्यपेक्षयेत्यत्र हेतुमाह मनुष्याधिकारत्वादिति । हृदये तद्ध्यानस्थानं तथाविधं मनुष्याणामेव भवति । नान्येषाम् । न हि खगा मृगा वा ब्रह्म ध्यायन्तो दृष्टाः । हृदयं तु स्यादेव तेषामपि । स्वामिनं चिन्तयन्तो दृश्यन्त एव तेनेकशः । न परं तेषां ब्रह्मणो ज्ञानम् । शास्त्रानुग्राह्यं हि तत् । शास्त्रं च मनुष्यैरेव गम्यम् । विधिनिषेधप्रवर्तकानि शास्त्राणि मनुष्यमधिकृत्यैव प्रवृत्तानि न देवादीन्वा पशुपक्ष्यादीन् । न हि शृङ्गेण ब्राह्मणमन्यं वा मनुष्यं घ्नती गौर्ब्रह्महत्यानरहत्यादिप्रत्यवायैर्युज्यते । एवं च मनुष्यहृदयपरिमाणापेक्षया तथोक्तिरिति ॥१।३।२५॥

( अथप्रमिताधिकरणे तदुपर्यधिकरणम् ॥ १ ॥ (६॥)

केवलमनुष्यस्याधिकारित्वं ब्रह्मध्यानेपह्नुवतो बादरायणस्य मतमाह—

## तदुपर्यपि बादरायणः सम्भवात् ॥१।३।२६॥

तेषामुपरि तदुपरि मनुष्योपरीत्यर्थः। भगवान्बादरायणो मनुष्योपर्यपि ब्रह्मध्यानाधिकारं स्वीकरोति। पूर्वं यदुक्तं मनुष्याधिकार एव ब्रह्मचिन्तने तन्न। मनुष्यातिरिक्ता अपि ब्रह्मध्यानेधिक्रियन्ते। कुतः? संभवात्। अत्रेदमवधेयम्। इदमधिकरणमस्पष्टलिङ्गकम्। उपरिशब्दो भिन्नार्थे प्रयुक्तः। मनुष्यभिन्नाः खगमृगादयोपि देवादयोपि च। केऽत्र ग्राह्या इति न स्पष्टम्। मनुष्याणामुपरि तदधिकं किञ्चिदस्ति नास्ति वा? यद्यस्ति तत्किमित्यादिविषयावलोडनश्रमं जिहासुना बादरायणेन मनुष्यजन्मनः परमस्ति किञ्चिदित्यभ्युपगम्यैव मनुष्येतराधिकारो ब्रह्मध्याने समर्थ्यते। संभवादितिहेतूपन्यासेन नार्यस्य बादरायणस्य दृढा प्रत्यभिज्ञा मनुष्येतराणां ब्रह्मध्यानप्रवणानामस्तित्वे। तथापि परमौदार्यं प्रकटयितुमसौ मनुष्येतरस्यापि यस्य कस्यापि संभावितस्य ब्रह्मध्यानाधिकारं समर्थयते।

अथवा मनुष्येतराणां देवानामपि ब्रह्मध्यानाधिकारोस्त्येव। "यां मेधां देवगणाः पितरश्चोपासते" (शु०य०३२।१४) इत्याम्नानात्। कथं तर्हि संभवादितिहेतोः सामञ्जस्यम्? मनुष्ययोनेरुपरि देवयोनिस्तस्या अप्युपरि स्यात्काचन योनिरिति संभाव्य तद्धेतुप्रदर्शनम् ॥१।३।२६॥

ननु स्यान्नाम ब्रह्मध्यानेधिकारो मनुष्यभिन्नानां देवादीनाम्; कर्मणि तेषामधिकारो न वेत्याह—

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ १।३।२७॥

आह प्रतिपक्षी, भवतु नाम ब्रह्मध्यानाधिकारो निर्विरोधो निर्जराणामपि, कर्मणि तु विरोधो वर्तते। कीदृशो विरोधः? ईदृशः-किञ्चिदीप्सन्नेव कश्चित्किञ्चित्कर्यारभते। ईप्सितं च तदैहिकमामुष्मिकं च भवति। इतो गतानामैहिकं फलं न संभवति। आमुष्मिकमपि न संभवति। स्वर्गकामो यजेतेत्यादिना विधिना स्वर्गं कामयमानाः कामिनो यजन्ते। स्वर्गतानां स्वरवस्थितानां च स्वर्गस्तु प्राप्त एव। किमिच्छतां तर्हि तेषां कर्मसु प्रवृत्तिः स्यात्? स्वर्गस्थिताः स्वर्गमिच्छन्तो यजन्तीत्येव विरोधः। इति चेन्न। नायं विरोधः। कुतः? अनेकप्रतिपत्तेर्दर्शनात्। अनेकेषां देवानां कर्मप्रतिपत्तेर्दर्शनात्। न केवलं स्वर्गायैव यजन्ते लोकाः। अन्यार्थमपि। स्वर्गस्थानामपि शत्रुवधादिकामास्तु भवन्त्येव। अत एव यज्ञेन यज्ञमयजन्त देवाः" (शु०य० ३१।१६) "तां देवाः। असुरेभ्योऽन्तरायंस्तां स्वीकृत्याग्नावेव परिगृह्य सर्वहुतमजुहवुराहुतिर्हि देवानां स यामेवामूमनुष्टुभा जुहवुस्तदेवैनां तद्देवाः स्व्यकुर्वत। तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इतिवदन्तः पराबभूवुः॥" (शत०३।१।२।२।२३) इत्यादीनि वेदब्राह्मणवचनानि चारितार्थ्यमनुभवन्ति ॥१।३।२७॥

ब्रह्मध्याने कर्मणि च विरोधमवरुध्य शब्दविरोधं प्रादुर्भावयितुमाह—

## शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ १।३।२८॥

विरोध इत्यध्याह्रियते । शब्द इत्यनेन वेदो गृह्यते । मा भूद्ब्रह्मध्याने विरोधो मा वा भूत्कर्मणि । शब्दे तु विरोधोऽस्त्येव । न ते शब्दरूपवेदाधिकारिणः । वेदग्रहणयोग्यताप्रापकसंस्काराभावात् । इति चेन्न । अतः प्रभवात् । अत एव देवेभ्य एव प्राकट्यमापन्नः शब्दः । यो यस्माज्जातः कथं स तमधिकारात्प्रच्यावयेत् ? कुतोऽवगम्यते शब्दो देवेभ्यो जात इति ? प्रत्यक्षानुमानाभ्याम् । अत्र प्रत्यक्षशब्दः श्रुतिं लक्षयति स्मृतिं चानुमानशब्दः । तेन प्रत्यक्षानुमानाभ्यामित्यस्य श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिश्च "अग्नेर्ऋग्वेदो वायो यजुर्वेदः सूर्यात्सामवेदः" (शत० ११।४।२।३) इति । स्मृतिश्च, "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः ॥" (मनु० १।२१) इति । नन्वेवं श्रुतिस्मृत्योर्विरोधः । श्रुतिरग्न्यादिदेवेभ्यो वेदमवतारयति स्मृतिश्च स्वयम्भुवः । कथमुभयोः सङ्गतिः ? इत्थम् । स्वयम्भूशब्देनात्र परमात्मैवोक्तः । तथा चाग्नेर्ऋग्वेद इत्यादिश्रुतौ परमात्मनश्चोदनयैवाग्न्यादिभ्यो वेदावतार इति न कोऽपि दोषः । एवं "(१)यज्ञेन वाचः पदवीयमा-

(१) यज्ञेन पुण्यकर्मणा वाचो वेदवाचः पदवीयं मार्गम् आयन् प्राप्नुवन् ।

यन्तामन्वविन्दन्नृषिषु प्रविष्टाम्" (ऋ० १०।७१।३) "यत्र धीरा मनसा वाचमक्रत" (ऋ० १०।७१।२) "यथेमां वाचं कल्याणी-मावदानि जनेभ्यः" (शु० य० २६।२) इत्यादिष्वपि न विरोधः ॥१।३।२८॥

वेदानां नियतत्वं साधयति—

## अत एव च नित्यत्वम् ॥१।३।२९॥

नित्यशब्दोत्र नियतार्थकः। नित्यं भुङ्क्ते नित्यं स्वपितीतिवत्। अत एव=वेदरूपशब्दो देवेभ्यः प्रादुर्भूतस्तस्मादेव तस्य नियतत्वम्। "सत्यमेव देवा अनृतं मनुष्याः" (शत० १।१।४;२।१।७) "सत्यप्रिया देवा अनृतप्रिया मनुष्याः" (शत०        ) इत्यादिवचनैः सत्यगिरो हि गीर्वाणाः। तेषां वचस्सु न स्यादनैयत्यम्। मात्राप्यनुस्वारोपि न शक्यते विपरिवर्तयितुम्। यादृगानुपूर्वी देवैर्गृहीता ग्राहिता च वेदानां तादृशैवानुपूर्व्या तेषु भाव्यम्। अन्यथा वेदानां वेदत्वमेव प्रतिहन्येत। चिरकालसाहित्यमपि नित्यत्वम्। नित्या द्यौर्नित्या पृथिवी नित्यमाकाशमितिवत्। यदि देववचनरूपवेदवचनमनियतं स्यात्सत्यत्वं हि देवानामुपह-

---

तां वेदरूपां वाचमृषिषु प्रविष्टां तत्त्वज्ञेषु महर्षिषु स्थितामन्वविन्दन्नलभन्त। "तामाभृत्या व्यदधुः पुरुत्रा तां सप्त रेभा अभि सं नवन्ते" इत्युत्तरार्धोऽस्या ऋचः। अर्थस्तु-तां वेदवाचमाभृत्याहृत्य पुरुत्रा पुरुषु बहुषु सर्वेषु मनुष्येषु ग्रहणसमर्थवागादिन्द्रियवत्सु व्यदधुः स्थापयामासुः सर्वानध्यापयामासुरित्यर्थः। सप्त रेभाः सप्त च्छन्दांसि गायत्र्यादीनि अभि सं नवन्ते सर्वत्र गच्छन्ति ॥

(१) यत्र यस्मिन्काले धीरा धीमन्तो वाचं वेदवाचमक्रत कृतवन्तः॥

न्येत। मा भूत्तस्योपहननमिति नियतानुपूर्वीको भगवान्वेदः। नात्र ध्वंसाप्रतियोगित्वं नित्यत्वम्। महाप्रलयस्वीकर्तॄणां मते कारणीभूताकाशस्य तदानीमभावात्कार्यभूतशब्दानामप्यभावः सुतरां सिध्येत्। न च यत आगतो वेदशब्दस्तमेव परमात्मानं प्रलये प्रविशेत्सृष्टिकाले च पुनस्तस्मात्स एव बहिरागच्छेदिति वाच्यम्। ज्ञानरूपस्य परमात्मनो ज्ञानदारिद्र्यमेव हि सम्पद्येत। न हि चत्वारो वेदाः परमात्मज्ञानस्य चरमां सीमां स्थापयन्ति। ततोऽप्यधिकेन ज्ञानेन परमात्मनि भाव्यम्। अन्यथा न स्याज्ज्ञानानन्त्यं तस्य। न चापौरुषेयत्वाद्वेदानां नित्यत्वमेवेति वाच्यम्। अपौरुषेयत्वेनैव वेदानां प्रामाण्यस्वीकारो नतु नित्यत्वेनापि। किं च तदपौरुषेयत्वमपि शपथशतनिर्णेयम्। शब्दोपदेशाय मुखाद्यवयवा अपेक्ष्यन्ते। न हि सन्ति परमात्मनस्तेऽवयवाः। किमपि लौकिकमलौकिकं वा शरीरमाधायोपदिशति वेदांश्चेदायातं पौरुषेयत्वम्। न च कर्तुरस्मरणाद्वेदानां नित्यत्वमिति वाच्यम्। "ऋचः सामानि जज्ञिरे" "छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" (शु०य०३१।७) "यस्मादृचो अपातक्षन्यजुर्यस्मादपाकषन्। सामानि यस्य लोमानि०" (अथ० १०।७।२०) इत्यादिवेदवचोनिचयेनैव वेदकर्तुः परमात्मनः स्मरणात्। एवं च नापि नित्यत्वेन नाप्यपौरुषेयत्वेन वेदानां प्रामाण्यं; किन्तु प्राक्तनविद्वत्समाजाङ्गीकृतत्वेनाप्तत्वेन चेति विज्ञेयम् ॥१।३।२९॥

नियतत्वादेवावृत्तौ विरोधं परिहरन्नाह—

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥१।३।३०॥

नियतान्येव वेदाक्षराणि। तत आवृत्तावपि पुनः पुनरुच्चार्यमाणेष्वपि वेदेषु तत्र नामरूपसामान्यादविरोधो विरोधाभावः। अयं भावः। अग्निमीडे पुरोहितमिति चैत्रेणोच्चारितम्। अयमेव मन्त्रः पश्चात्तदानीमेव कालान्तरे वा मैत्रेणोच्चारितोऽन्यैरपि। यदि वेदानां नियतत्वं न स्यादन्येनान्यथोच्चारितेऽन्येन चान्यथा व्यवस्था भज्येताव्यवस्था च प्रसज्येत। ततश्च "ईशानमस्य जगत" इत्यस्य स्थाने "ईशानस्येमं जगतः" इति पाठे ब्रह्मणो जगत्परवश्त्वं प्राप्येत। नियते च पाठेत्र शताब्दान्तेपि वा "अग्निमीडे पुरोहितम्" "ईशानमस्य जगतः" इत्येवोच्चार्येत। किं च "विश्वा ते अग्ने त्रेधा त्रयाणि विश्वा ते धाम विभृता पुरुत्रा" इत्यस्य विश्वा ते। ते विश्व। विश्वा ते। ते अग्ने त्रेधा। त्रेधाऽग्ने ते। ते अग्ने। अग्ने त्रेधा। त्रेधा त्रयाणि विश्वा ते। ते विश्व त्रयाणि त्रेधा। त्रेधा त्रयाणि। त्रयाणि विश्व। विश्वा ते। ते धाम विभृता पुरुत्रा। पुरुत्रा विभृता धाम ते। ते धाम। धाम विभृत। विभृता पुरुत्रा। विभृतेति वि। भृता। पुरुत्रेति पुरु। त्रा।" इति रेखापाठेपि समाननामरूपत्वादविरोधः। पाठनैयत्यरक्षणायैवायमायासः। विरोधाभावे हेतुद्वयमाह—दर्शनात्स्मृतेश्चेति। दर्शनं वेदपाठव्यवहारवैविध्यम्। तच्च निदर्शितम्। स्मृतिश्चैषा—

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोपराधात् ॥" इति। न चेयं स्मृतिः पाणिनीयत्वात्पश्चात्तनी व्यासस्येति नात्र प्रमाणपदवीमवगाहेतेति तवाग्रहश्चेन्मृग्या तर्हि काचिदन्या। एवं च दिवौकसामपि वेदशब्दग्रहणाधिकारो बादरायणेन समर्थितः ॥१।३।३०॥ इति प्रमिताधिकरणे तदुपर्यधिकरणम् ॥१॥(६) ॥

(अथ प्रमिताधिकरणे मध्वाद्यधिकरणम् ॥२॥ [६])

देवानां मध्वाद्यधिकारे जैमिनिमतमुपस्थापयति—

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥१।३।३१॥

अध्यात्मविद्यादेवविद्यामधुविद्याद्याः सन्त्यनेका विद्याः। ताः सर्वा उद्दिश्यैवायं प्रसङ्गः। जैमिनिराचार्यो मन्यते मध्वादिषु विद्यासु नाधिकारो देवानाम्। कुतः? असम्भावात्। अयं भावः। अथर्ववेदे मधुविद्या श्रूयते। तथा हि [1]"यथा मधु मधुकृतः सं भरन्ति मधावधि। एवा मे अश्विना वर्च आत्मनि ध्रियताम्" [2]"यथा मक्षा इदं मधु न्यञ्जन्ति मधावधि। एवा मे

(१) यथा मधुकृतो मधुमक्षिका मधावधि अधिमधु मधुपुटे मधु संभरन्ति समाहरन्ति संचिन्वन्ति एवा एवं हे अश्विनौ, मे ममात्मनि वर्चो ब्रह्मवर्चसं ध्रियतां स्थाप्यताम्।

(२) यथा मक्षा मक्षिका मधौ अधि इदं मधु न्यञ्जन्ति न्यञ्जयन्ति प्रकाशयन्ति संचिन्वन्ति वा एवा एवं मे मम मयि वर्चो ब्रह्मवर्चसं तेजो मिथ्याचारासहिष्णुत्वं बलं शत्रुनिराकरणसामर्थ्यमोजोसह्यत्वं च ध्रियताम्।

अश्विना वर्चस्तेजो बलमोजश्च ध्रियताम् ॥" "यद्गिरिषु पर्वतेषु गोष्वश्वेषु यन्मधु । सुरायां सिच्यमानायां यत्तत्र मधु तन्मयि" (अथ० ९।१।१६,१७,१८) "मधुमन्मे निक्रमणं मधुमन्मे परायणम् । वाचा वदामि मधुमद्भूयासं मधुसंदृशः ॥" (अथ० १।३४।३) "मधु जनिषीय मधु वंशिषीय" (अथ०९।१।१४) इत्यादिर्मधुविद्या हि मानवोपयोगिषु सर्वेष्वेव धर्माङ्गेषु रुचिं रचयति । मधुमत्त्वं कल्याणकामैः स्वेष्वानेयमित्युक्त्वा तत्रैव "ब्राह्मणश्च राजा च धेनुश्चानड्वांश्च व्रीहिश्च यवश्च मधु सप्तमम्"(अथ०९।१।२२) इत्युत्तरार्धेन सप्त मधूनि समुपदिष्टानि । पूर्वार्धेन चैतज्ज्ञानस्य फलमाह "यो वै कशायाः सप्त मधूनि वेद मधुमान् भवति । अत्र जैमिनेरयमाशयः—भौमान् हि निखिलान्भावाननुभूयैव क्रतुभुक्त्वं भजताममृतान्धसां सप्त मधूनि प्राप्तुं न जागर्ति योग्यता । किं चानुडुत्त्वं व्रीहियवादिभवनं च तेषां न संगच्छते । न केवलं देवानां नरदेवानामपि मधुसम्पर्कं न संभवतीति शम् ॥१।३।३१॥

अपरं हेतुमुद्भावयति—

(१) गिरिषु मेघेषु अथवा गिरिषु पूज्येषु श्रेष्ठेषु पर्वतेषु गोष्वश्वेषु च यन्मधु माधुर्यं, सिच्यमानायां सुरायां सुखं राति ददातीतिसुरा तस्यां वारिधारायां यन्मध्वस्ति तन्मय्यस्तु ।

(२) मे मम निक्रमणमाचारो मधुमन्माधुर्यवान् भवतु । मम परायणं दूरवासो यस्मिन्कस्मिन्नपि वस्तुनि तल्लीनता वा मधुमन्मधुमती भवतु । अन्यत्स्पष्टम् ।

## ज्योतिषि भावाच्च ॥१।३।३२॥

ज्योतिषि ज्योतिस्स्वरूपे परमात्मनि भावान्मनोनिवेशान्न मध्वादिविद्यासु हविर्भुजामधिकारः ॥१।३।३२॥

वादरायणमतमुपन्यस्यति—

## भावं तु बादरायणोऽस्ति हि ॥१।३।३३॥

तुः पक्षविभाजकः। बादरायणो देवानामपि हि मध्वादिविद्यास्वधिकारं मन्यते। अस्ति हि। देवानामपि मधुविद्यातो ग्रहीतव्यं किञ्चिदस्त्येव। न हि सर्वे देवा ज्योतिर्द्योतितान्तःकरणाः। श्रूयन्ते तेषामपि कषायाः। तेपि रागिणः। तेपि कामिनः। अतो "मधुमन्मे निक्रमणं मधुमन्मे परायणम्। वाचा वदामि मधुमद्भूयासं मधुसंदृशः" इत्यादिमधुमत्त्वं तेषामप्यपेक्षितमेव। हिर्हेतौ ॥१।३।३३॥

ननु "विद्वान्सो हि देवाः" इति शतपथकथनानुमन्थनाद्विद्वांसोपि देवाः। न हि वर्णांगमवन्तोत्र देवत्वेन विवक्षिताः। ब्रह्मज्ञानवन्तो हि देवाः। तेषामप्यत्राधिकारविचारः कर्तव्यः। आप्तकामानां विदुषां नास्ति किञ्चिदधिजिगमिषितं न वा निराचिकीर्षितमतो नास्ति तेषां तत्राधिकार इति मन्वानं प्रत्याह—

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ॥१।३।३४॥

वादरायणमतमेव द्रढयितुमस्य प्रसङ्गस्यावतारः। प्रसङ्गोयं ताण्ड्यमहाब्राह्मणे छान्दोग्योपनिषदि समुपारूढः। जानश्रुतिः

पौत्रायणः कश्चनोदारोनपेक्षितद्रविणदारागारो वदान्यः क्षत्रिय आसीत्। कस्यांचित्रियामायां प्रासादतले कस्मिंश्चिदहश्येवकाशे शयानस्तत्र विशिश्रमिषया समागतेषु हंसेष्वेकेन कीर्त्यमानां स्वां कीर्तिं शुश्राव । अपरेण च केनापि मरालेनाविज्ञातजानश्रुतिपौत्रायणमाहात्म्येन विदितरैक्वमाहात्म्येन च जानश्रुतिः पौत्रायणोपमेने । आदृतधर्मादरस्य तस्य स्वानादरश्रवणेन शुगुत्पेदे । स तस्याः शुचः परिजिहीर्षया क्षत्रा मार्गयित्वा च रैक्वमुपदुद्रावेत्यौपनिषदी गाथा । तामेवाश्रित्य बादरायणः समाधत्ते । तदनादरश्रवणान्मरालकृतानादरश्रवणादस्य जानश्रुतेः पौत्रायणस्य शुगुत्पन्ना । तदाद्रवणात् तया शुचाद्रवणाद्गमनाद्रैक्वसमीपे । सूच्यते हि निश्चितं प्रतीयते । किं प्रतीयते ? विदुषामपि शुचा सन्तप्तमानसजुषां शोकसंमार्जनसमर्थामर्थ्यां काञ्चन विद्यां ग्रहीतुमुपव्रजनं हि तद्विद्यावतां सन्निधान इति ॥१।३।३४॥

अपरोप्ययं हेतुः—

## क्षत्त्रियत्वावगतेश्च ॥१।३।३५॥

जानश्रुतौ पौत्रायणे क्षत्त्रियत्वस्यावगतिरपि भवति। गमनं हि वर्णाश्रमाभिमानस्य विद्यायाः फलम् । तस्य त्वहं क्षत्त्रियोस्मीति नरपतिरस्मीति गर्वोखर्वो बभूव । न हि विद्वत्त्वं क्षत्त्रियत्वं च सामानाधिकरण्यं भजेयाताम् । एतादृशामर्धविदुषामस्त्येव मध्वादिष्वधिकारः ॥१।३।३५॥

कथमवगतं जानश्रुतेः पौत्राणयस्य क्षत्त्रियत्वमित्याह—

## उत्तरत्र चैत्ररथेन लिङ्गात् ॥१।३।३६॥

उत्तरत्रास्मिन्नेव प्रकरणेऽव्यवहितोत्तरमेव गीताविगीता कापेयगाथा । तत्र चैत्ररथः क्षत्रियः "एतेन वै चित्ररथं कापेया अयाजयन् ॥ (ताण्ड्य०२०।१२) इति ब्राह्मणप्रमाणेन कर्माधिकारी क्षत्रियत्वेनैवासीच्चैत्ररथः । समानप्रकरणसंकीर्तनाद् धनकन्यादिप्रदानपुरस्सरविद्याग्रहणरूपक्षत्रियलिङ्गाच्च जानश्रुतिः पौत्रायणोपि क्षत्रिय एवासीदिति ॥१।३।३६॥

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥१।३।३७॥

परामर्शो विवेकः । संस्कारस्य परामर्शः संस्कारपरामर्शः । संस्कारविवेक इतियावत् । संस्कारस्य विवेकः कर्तव्यः । नास्ति यदि कस्मिंश्चिद्विदुषि मानापमानजनितहर्षशोकविगती रतिश्च भवति कञ्चनकामिनीकामेष्ववश्यं हि तेन "यथा मक्षा इदं मधु न्यञ्जति०" इतिमधुविद्यासेवनीया । जानश्रुतेः पौत्रायणस्य संस्कारपरामर्शात्, तदभावाभिलापाच्च विद्वद्धर्माभावस्याभिलापादुपवर्णनाच्च विद्याग्रहणेधिकारो दृष्टः ॥१।३।३७॥

अपरोयं हेतुः—

## तदभावनिर्धारणे च प्रवृत्तेः ॥१।३।३८॥

तदभावस्य वैराग्यसंस्काराभावस्य निर्धारणे निर्भ्रमज्ञानार्जने प्रवृत्ते रैक्वस्येतिभावः । पूर्वमानीतानि गोनिष्कादिद्रव्याणि शूद्रेति तिरस्कृत्य प्रत्याख्यातानि रैक्वेण । पुनरप्यानीतानि तान्येव दुहित्रा सह तेन रैक्वाय ग्रहीतुं तदुपासितां

विद्याम् । तत्परीक्षण एव प्रवृत्तो रैक्वः । यदि जानश्रुतिर्वैराग्यवान् स्यान्न स्यात्तस्य प्रवृत्तिर्द्रविणानयने रमणीचरणानयने वा । आत्मसमर्पणेनैव गृहीता भवेद्रैक्वविद्या । तथा तु न समपद्यत । अतो निश्चिकाय रैक्वस्तं स्वोपासितविद्याधिकारीति ॥१।३।३८॥

ननु कथं रैक्वः स्वोपासितां संवर्गविद्यामेव तस्मै प्रदाय कार्तार्थ्यं गतमात्मानं मेने ? कथं नानुग्रहाधीनो भूत्वा मुख्यामात्मविद्यां परमात्मप्रवणां सर्वक्लेशकायापसारिणीं हर्षशोकमोहादिसंहारिणीं च तस्मा उपदिदेशेति संशयानं प्रत्याह—

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥१।३।३९॥

सज्जीभूते हि क्षेत्रे बीजवापो लाभाय फलाय च भवति । यावत्कश्चिदहन्ताममतालतासंवलितान्तरात्मैवावतिष्ठते न वा कामयते कान्ताया विरक्ततायां मृणालकान्तबाहुलतासम्पादितात्मकण्ठपाशं न वा व्यथते चिरपरिचितपरमेश्वराविदितानेहःसमाहृतविरहव्यथया तावत्तस्य वेदश्रवणरूपार्थस्य वेदाध्ययनरूपार्थस्य च प्रतिषेधः । तथाहि "यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् । यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥" (निरु० नै० २।१।४) इति प्रमत्ताय ब्रह्मचर्यानुपपन्नाय विद्या न वक्तव्येति श्रवणनिषेधः। प्रमत्तश्च परमात्मपदवीप्रपदनप्रमादवान् । स्मृतेश्च। स्मृतावपि विवेकिनो मनुष्यस्य विद्वदुचितज्ञानमार्गेऽधिकारो नेतरस्य। तथाहि—"विद्य-

यैव समं कामं मर्तव्यं ब्रह्मवादिना । आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥" "विद्या ब्राह्मणमेत्याह शेवधिष्टेऽस्मि रक्ष माम् । असूयकाय मां मादास्तथा स्यां वीर्यवत्तमा ॥" "यमेव तु शुचिं विद्यान्नियतब्रह्मचारिणम् । तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥" (मनु०२।११३-११५) इत्यादि ।

अत्र तावदन्याप्यौचित्यमावहन्ती चर्चा चर्चनीया । श्रीशङ्कराचार्याः श्रीरामानुजाचार्या अन्ये चापि ततः परस्तात्समायाता आचार्या अत्र शुगस्य तदनादरश्रवणादित आरभ्य श्रवणाध्ययनार्थप्रतिषेधादिति यावदपशूद्राधिकरणं मेनिरे । श्रीशङ्करस्वामिनोपशूद्राधिकरणं प्रारभमाणा ब्रुवते "यथा मनुष्याधिकारनियममपोह्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशङ्कां निवर्तयितुमिदमधिकरणमारभ्यत इति । अत्र तावद्बहु वक्तव्यम् । तदुपर्यपि बादरायणः सम्भवात् (१।३।२६) इत्यनेन सूत्रेण मनुष्यातिरिक्तस्यापि ब्रह्मध्यानाधिकारः समर्थितो बादरायणेन । तत्र तदुपरीति शब्दो निपतितः । कमर्थमादाय भगवता सूत्रकारेण स इहोपस्थापित इत्यनिश्चितमेव । अत एवान्ते सम्भवादित्याह । उपशब्दस्य बहुधा प्रवृत्तिः । "उपर्यध्यधसः सामीप्ये" (पाणि०८।१।७) इतिपाणिनिस्मृतेः सामीप्यमप्यर्थः । उपरि चन्द्रमा इत्यत्रोर्ध्वप्रदेशोर्थः । उपरि शिरसो मुकुटं धारयतीत्यादौ केवलं शिरसो बाह्यप्रदेशे विश्राम्यति । दन्तस्योपरि रक्तिमेत्यादावपि दन्तरूपाधारं समर्पयति । "तदु-

परि किं जातमिति न जानीमहे" इत्यत्र पाश्चात्त्यं कालं बोधयति। आनन्तर्यमित्यर्थः। श्रैष्ठ्येपि। सर्वोपर्ययमित्यादौ। नायमेतस्मादुपरीत्यादौ भेदमप्यवगमयतीति। प्रसिद्धतयोपरिशब्दस्य श्रैष्ठ्यार्थ एव वृत्तिः कल्प्यताम्। एवं च तदुपरीत्यस्य मनुष्येभ्यः श्रेष्ठ इत्यर्थः। मनुष्येभ्यः श्रेष्ठः कश्चन देवादिर्ब्रह्मध्यानाधिकारार्हः स्यान्नवेति विवादाक्रान्तम्। न हि कश्चन ब्रह्म ध्यायन्देवो दृष्टः। यदि तथा कल्प्यते तर्हीदं वक्तव्यं शूद्रस्येव देवस्यापि वेदाध्ययनं नास्ति, उपनयन संस्काराभावात्; कथं तर्हि ब्रह्मध्यानाधिकारे देवप्रवृत्तिः? यद्यनुपनीतो देवो वेदमध्येतुं शक्नोति किमपराद्धं तर्हि शूद्रेण। ब्रह्मपादजातत्वमेवापराध इति चेन्न। सुरनरादिभिः सकलैरेव ब्रह्मपादस्यार्चनीयतया निरपराधत्वाद्ब्रह्मपादस्य तज्जेपि निरपराधत्वं निर्बाधम्। शूद्रो यज्ञेनवक्लृप्त इति वचनेन मा भूद्यज्ञे तस्याधिकारो ब्रह्मध्याने कुतो न? न च ब्रह्मध्यानस्य वेदाध्ययनपूर्वकत्वाद्वेदाध्ययनस्य चोपनयनपूर्वकत्वाच्छूद्रस्य चोपनयनाभावान्नाधिकार इति पूर्वमेवोक्तमितिवाच्यम्। अनुपनीतस्य देवस्य यथा वेदाध्ययनं तथैव शूद्रस्यापीतिसमाहितत्वात्। यच्च शूद्रो यज्ञेनवक्लृप्त इति तन्न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयतीत्युक्तं तन्न समीचीनम्। यज्ञो हि कर्म। अदृढा हि सा नौः कर्मरूपापारसंसारात्पारं नेतुम्। ज्ञानं चोदीयमानमेव सर्वाविद्यान्धतमसं निर्गलितशवसं करोति। महदन्तरं हि ज्ञानकर्मणोः। कथं ज्ञानमार्गाचार्यः कर्मप्रयुक्तं न्यायं ज्ञाने योज-

यतीति नाववोद्धव्यम्। किं चास्मिन्प्रकरणे शूद्रशब्दो न कुत्रापि श्रूयते। कथं तर्ह्येतादृशं हास्यास्पदं सर्वैस्तिरस्करणीयमधिकरणं रचयितुं स प्रवृत्त इति को वेद। मीमांसादर्शने षष्ठाध्याये प्रथमे पादे सप्तममपशूद्राधिकरणं प्रस्तुवता जैमिनिना तु नान्याय्य-माचरितम्। अवश्यं कर्माणि नियताधिकाराण्येव। न हि सर्वः सर्वं कर्म कर्तुं पारयेत्। ज्ञाने तु न तथा निर्बन्धो भवितुमर्हति। यस्याज्ञानलेशो यस्मिन्नेव काले प्रयायादुपशमं तस्मिन्नेव काले तत्रोदियाज्ज्ञानप्रभा। कस्तां निर्वापयितुं शक्नुयात्?

किं च, कस्तावद्वेदाधिकारीति वेदेनैव वक्तव्यम्। तत्र तु न कुत्रापि संकेतेनापि निवारितोधिकारः शूद्राणाम्। प्रत्युत "यथेमां वाचं कल्याणीमा वदानि जनेभ्य०" इत्यस्मिन्मन्त्रे सर्वाधिकारा परमाप्ता परमात्मवाणीत्येवोपदिष्टम्। ब्राह्मणानि तदधिकारं निवारयन्ति चेन्निवारयन्तु नाम। किं तेन। कर्ममार्गप्रवर्तकान्येव तानि। कर्ममार्गे हि तेषां शासनं नान्यत्र। कात्यायनेनापि "फल-युक्तानि कर्माणि" ॥२॥ सर्वेषामविशेषात् ॥३॥ मनुष्याणां वारम्भसामर्थ्यात् ॥४॥ अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम् ॥५॥" इत्यादिसूत्रयता परिभाषाध्याये कर्मण्येव नाधिकारस्तेषामिति स्पष्टमुद्घोष्यते। अवशिष्टस्तु धर्मसूत्रकारो गौतमः। कोयं गौतमः कदा बभूवेति न निश्चितम्। इदं तु विज्ञायते मीमांसादर्शनभा-ष्यकारश्रीशवरस्वामिसमये नासीदयं गौतमग्रन्थः। यद्यभविष्य-दवश्यं स एतद्वचनमुदाहरिष्यत्। अपशूद्राधिकरणे न स कुत्राप्ये-नमस्मार्षीत्। शङ्करसमये त्वासीदेव। कात्यायनसूत्रभाष्यकार-

कर्काचार्यसमयेप्यासीदेवायं ग्रन्थः । अतः पूर्वं, "शूद्रो यज्ञे-नवक्लृप्तः" इत्यतः पूर्वं च का व्यवस्थासीद्वेदानामध्ययनाध्या-पनयोरिति मीमांस्यम् । ऋग्वेदस्य प्रथममण्डले षोडशाधिकैक-शततमस्य सूक्तस्यर्षिः कक्षीवानस्ति । स चोशिक्संज्ञायाम-ङ्गराजस्य महिष्यां दास्यां दीर्घतमसोत्पादितः । नवममण्डलेपि चतुस्सप्ततितमस्य सूक्तस्य स एवर्षिः । तस्यैव पुत्रस्तद्गोत्रोत्पन्नो वा शबरोपि दशममण्डल एकोनसप्तत्यधिकैकशततमस्य सूक्त-स्यर्षिः । कक्षीवत एव पुत्री घोषापि दशममण्डले बहूनां मन्त्रा-णामृषिका । अतः परमगस्त्यस्वसा, अदितिः, इन्द्रस्नुषा, गोधा, नदी, यमी, शश्वती, सरमा, सूर्या, उर्वशी, आत्रेयी, इन्द्राणी, शिखण्डिनीत्यादयो ब्रह्मवादिन्य ऋषिका अप्यृग्वेदे दृश्यन्ते । एतेन "स्त्रीशूद्रौ नाधीयीयाताम्" इति वचनमपि समाहितं भवति । ऋणञ्चयनहुषादयः क्षत्रिया अपि वेदर्षयः सन्ति । वैश्या अपि भवेयुः । नैकस्य सञ्चिता सम्पत्तिर्वेदाः । सर्वेषां हि ते । कथं तर्ह्येकेनैव भोक्तव्याः ? एवं च कर्मिणामेवालये तिष्ठत्वयं विचारः कर्मसु कोधिकर्तव्य इति । ब्रह्मध्याने तु सर्वेषामधि-कारः । वेदाध्ययनेपि सर्वेषामधिकारः । गोतमवचनं त्ववैदिक-मेव यथा तथोपरि साधितम् । "समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् । समानं मन्त्रमभि मन्त्रये वः" (ऋ०१०।१९१।३) इत्यन्तिममण्डलस्यान्तिमसूक्तस्योपान्त्येन मन्त्रेण सर्वेषां ब्राह्मणक्षत्रियवैश्यशूद्राणां समानमन्त्रत्वोपपादन-मपि वेदानां सर्वाधिकारत्वं समर्थते ।

एवं च सिद्धं सर्व एव निषेधाः कर्माण्युद्दिश्य प्रवर्तन्त इति। गोतमवचनमवैदिकत्वान्नादर्तव्यम्। न चात्र व्यासदर्शनेऽपशूद्राधिकरणम्। गोतमवचनादेव तस्य साधनीयतया गोतमस्य च वैयासिककालभिन्नकालतया तदाश्रयोस्मिन्दर्शने न कथञ्चिद्घटतेतमाम् ॥१।३।३९॥ इति प्रमिताधिकरणे मध्वाद्यधिकरणम् ॥३॥ [६]॥

( अथ प्रमिताधिकरणे कम्पनाधिकरणम् ॥४॥ [६] )

नातीवावश्यकीमानुपङ्गिकीं ब्रह्मध्यानाधिकारचर्चां समर्च्य प्रस्तुतमाह—

## कम्पनात् ॥१।३।४०॥

ननु कस्य साध्यस्यायं हेतुः? हृद्यपेक्षयैव परमात्मनो दशाङ्गुलत्वं स्वतस्तु सर्वव्यापकत्वमत एव विभुत्वमिति प्रक्रान्तम्। तत्रैवायं हेतुः। "सहस्व मन्यो अभिमातिमस्मे रुजन्मृणन्प्रमृणन्प्रेहि शत्रून्। उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयासा एकजत्वम् ॥ (अथ०४।३१।३) "तव व्रते निविशन्ते जनासः"

(१) हे मन्यो मन्युस्वरूप! अस्मे अस्माकमभिमातिं शत्रुं सहस्व पराभव। किं च रुजन् भञ्जन्। मृणन् हिंसन्। मृण हिंसायाम्। प्रमृणन् अतिशयेन हिंसंश्च शत्रून् प्रेहि शत्रुषु पराक्रमस्व। ते तवोग्रं पाजो बलं ननु अवश्यमेव आ रुरुध्रे शत्रूनारुन्धीत। हे एकज अद्वितीय परमात्मन्, त्वं वशी असि अतो वशं नयासै शत्रून् वशं कर्तुं शक्नोषि।

(२) तव व्रते कर्मणि नियोगे जनासो जना निविशन्ते प्रविशन्ति। तवाज्ञां पालयन्तीत्यर्थः।

(अथ०४।२५।३) [1]"यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने।" (ऋ०१०।१२१।६; शु०य०३२।७) [2]"द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते।" (अथ० २०।३४।१४) [3]"रेजन्ते भुवनानि विश्वा।" (अथ०२०।३४।१७) [4]अस्येदु भिया गिरयश्च दृढा द्यावा च भूमा [5]जनुषस्तुजेते।" (अथ०२०।३५।१४) [6]"त्वद्भिया विश आयन्नसिक्नीः" (ऋ०७।५।३) "यस्य शुष्माद्रोदसी [7]अभ्यसेताम्" (ऋ०२।१२।१) इत्यादिषु मन्त्रेषु तस्य भिया सर्वकम्पनप्रदर्शनान्न तद्दशाङ्गुलप्रमाणमत्यल्पं वस्तु ॥१।३।४०॥ इतिप्रमिताधिकरणे कम्पनाधिकरणम्॥४॥[६]॥ इतिप्रमिताधिकरणम् ॥६

(अथज्योतिरधिकरणम् ॥७॥)

पुनरपि ब्रह्मस्वरूपं लक्षयति—

## ज्योतिर्दर्शनात् ॥१।३।४१॥

"शुक्रोसि भ्राजोसि स्वरसि ज्योतिरसि" (अथ०।२।

---

(१) क्रन्दसी द्यावापृथिव्यौ अवसा रक्षणेन तस्तभाने स्थिरे। रेजमाने कम्पमाने च मनसा चेतसा बुद्ध्या वा यमभ्यैक्षेतां यमभिपश्यतः।

(२) द्यावा द्युलोकः पृथिवी चिद् भूलोकश्चापि अस्मै परमात्मने नमेते, अस्य चित् परमात्मन एव शुष्माद्बलात् पर्वता भयन्ते बिभ्यति।

(३) विश्वा विश्वानि भुवनानि रेजन्ते कम्पन्ते।

(४) यस्य इत् उ इति च्छेदः।

(५) जनुषो जनुष्मन्तस्तुजेते कम्पन्ते।

(६) त्वद्भिया असिक्नीरसितन्यः कृष्णा विशः प्रजा आयन्वशमितिशेषः।

(७) बिभ्यतः।

११।५॥ "दिवो नाकस्य पृष्ठात्स्वर्ज्योतिरगामहम्" (अथ०४।१५। ३) "देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्" (शु०य० ) इत्यादिषु ज्योतिस्स्वरूपत्वप्रतिपादनाज्ज्योतिस्स्वरूपं हि तद्ब्रह्म। न चाग्निसूर्यचन्द्रादीनामेव ज्योतिःस्वरूपब्रह्मत्वं शङ्क्यम्। "ज्योतिरसि विश्वरूपं विश्वेषां देवानां समित् ॥ (शु०य०५। ३५) इत्यनेन तस्य विश्वरूपतायाः सर्वदेवसमित्त्वस्य च प्रतिपादनात्। समित्त्वं प्रकाशकत्वम्। समिन्धे समिन्धयतीति वा समित्। इन्धी दीप्तौ ॥१।३।४१॥

ज्योतिस्स्वरूपतां ब्रह्मणः प्रतिपाद्य सर्वरूपतां तस्याह—

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥१।३।४२॥

स परमात्माकाशः। आ समन्तात्सर्वत्र सर्वरूपेण काशते प्रकाशत इत्याकाशः। "वहुधा विजायते" इति हि वेदोपदेशः। एवं च द्यावापृथिव्योस्तदन्तराले च यत्किञ्चित्प्रतीयते सर्वं तत्तस्यैव स्वरूपम्। अत एव स आकाशः सर्वरूपः। "बहुधा विजायते" "असि विश्वरूपम्" इत्यादीनि वेदवचनानि सर्वस्य मनुष्यमात्रस्य च ब्रह्मस्वरूपत्वमभिधाय भेदायातानि यातनासहस्राण्यपवारयन्ति। अतीव व्यामोहोद्य वेदमर्यादानभिज्ञानां तत्त्वार्थज्ञानविहीनानामयं ब्राह्मणोयं चान्त्यज इति। लूता स्वयमेव तन्तुजालं निर्मांति तत्रैव रमते तत्रैव च वन्धं प्राप्य विपीदति। एवमेवाज्ञानिनः स्वयमेवायं ब्राह्मणोयं क्षत्रियोयं वैश्योयं शूद्रोयं चान्त्यजः, अयमस्मादधिकोयं च तस्मादवरः, अयं सुखा-

दुत्पन्नोयं च पादाभ्याम् अयं स्पृश्यः स चास्पृश्य इत्येवंरूपाणि त्रिविधानि कल्पनाजालानि वितायाहङ्कारमहाग्राहगृहीता असदपि सदेव जानानाः सदपि चासदेव मन्वाना महापद्धतीयां पतिता विषीदन्ति । न जागर्ति तेषां ज्ञानभानुः । न हि चरति विचारचारिमा हृदये च तेषाम् । अविद्याभारावनतेषु न तेषु समुद्भवति मानवस्वभावसुलभः स्नेहः स्वधर्मबन्धुषु । हन्त ! दुरन्ते माये नाद्यापि विरमसि विलासलासभूमेः ? धिक्त्वा क्रूरां मनुनयसंगतसंहारिणीम् । सत्यप्येकस्मिंस्तस्मिन्नर्थान्तरत्वव्यपदेशोनुभूयते ततः स आकाशः कृतशतविधरूपप्रकाश इत्यर्थः ॥ १।३।४२॥

जीवोपि ज्योतिराकाशो वा भवितुमर्हति न वेत्याह—

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥१।३।४३॥

सुषुप्तिः स्वापः । उत्क्रान्तिर्जागृतिः । उभयोरेवानयोरवस्थयोर्भेदेनोभयोर्जीवब्रह्मणोर्व्यवहारो दृश्यते । अतो न जीवो ज्योतिस्स्वरूपो बहुरूपो वा । अयमाशयः । श्रूयते हि "यो नः सुप्ताज्जाग्रतो वाभि दासात्तिष्ठतो वा चरतो जातवेदः । वैश्वानरेण सयुजा सजोषास्तान् प्रतीचो निर्दह जातवेदः ॥" (अथ०७।१०८।२) इति । "सुप्तानां जाग्रतां वास्माकं यो द्रोग्धा तं निर्दह हे परमात्मन् ज्ञानवन्" इति प्रार्थयमानानां जीवानां भेदेन व्यवहारोत्र दृश्यते । रक्ष्यरक्षकभावो हि भेदमावहति । यस्य जागरितावस्थायां सुषुप्तावस्थायां च सततं भीर्वा-

धते मनः कथं सज्योतिस्स्वरूपः स्वसामर्थ्येन बहुरूपो वा भवितुमर्हति ? ॥१।३।४३॥

ज्योतिस्स्वरूपबहुरूपादिशब्दप्रख्यापितं ब्रह्म जीवादर्थान्तरभूतमेवेति स्थापयितुमत्रान्तिमं हेतुं सञ्चारयति—

## पत्यादिशब्देभ्यः ॥१।३।४४॥

इति श्रीमद्रामसन्त्राचार्य्यैः श्रीमद्व्यासमहर्षिभिः प्रणीते वेदान्तदर्शने प्रथमाध्याये तृतीयः पादः



पतिरादिर्येषां ते पत्यादयः। ते च ते शब्दाश्च पत्यादिशब्दास्तेभ्यः। परमात्मानमुद्दिश्य बहुशो हि पत्यादिशब्दाः प्रयुक्ताः। तेभ्योपि हेतुभूतेभ्यो विज्ञायतेर्थान्तरभूतमेव ब्रह्म-जीवेभ्यः। के ते पत्यादिशब्दाः ? श्रूयन्ताम्। "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्" (ऋ० १०।१२१।१) "उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयासा०" (अथ० ४।३१।३) "य आत्मदा बलदा" (ऋ० १०।१२१।२) "न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते" (ऋ० ७।३२।२३) "ईशानमस्य जगतः" (ऋ० १०।११४।२) "मातेव यद्भरसे पप्रथानो जनंजनं धायसे चक्षसे च। वयोवयो जरसे यद् दधानः परि त्मना विषुरूपो जिगासि ॥" (ऋ०५।१५।४) इत्यादयः। अत्रोक्ता अर्था न जीवेषु संभवन्तीति जीवब्रह्मणोर्भेद एव। सोयं भेदो नित्य एवेतिवैदिकसिद्धान्तः। तथा हि, "कः पृश्निं धेनुं वरुणेन दत्तामथर्वणे सुदुघां नित्य-

वत्साम् । बृहस्पतिना सख्यं जुषाणो यथावशं तन्वः कल्पयाति ॥" (अथ० ७।१०४।१) इत्यस्य मन्त्रस्यायमर्थः—वरुणेन वरणीयेन परमात्मनाथर्वणे विनाशरहिताय जीवाय दत्तां धेनुं कामप्रदां सुदुघां नित्यवत्सां नित्यो वत्सो वत्सवल्लालनीयो जीवो यस्य तां पृश्निं दिवादित्यादिरूपां प्रकृतिं प्रकृतिजां तनुं च जुषाणः सेवमानो बृहस्पतिना परमात्मना सख्यं च जुषाणो यथावशं यथेच्छं तन्वः तनूः कल्पयाति कल्पयतीति । अत्र त्रीणि तत्त्वान्युपदिष्टानि । प्रथमम्, इदं शरीरं भुज्यमानं परमात्मनैव जीवाय दत्तमिति । द्वितीयम्, अस्य शरीरस्य वत्सः शरीरस्थितो जीवो नित्य इति । तृतीयम्—' ब्रह्मसाहचर्यं प्राप्य कृतकृत्यः स यथेच्छया शरीरं कल्पयति स्थापयति धारयतीतिभावः । परमात्मभक्तिमनुभवन्हि सर्वदा तिष्ठति चेत् स्वेच्छया शरीरं दधाति जहाति चेति ॥१।३।४४॥ इति ज्योतिरधिकरणम् ॥७॥

इति सर्वतन्त्रस्वतन्त्र—परमहंसपरिव्राजक—स्वामिश्रीभगवदाचार्यमहाराजैः प्रणीते वेदान्तदर्शन—वैदिकभाष्ये प्रथमेध्याये तृतीयः पादः

# प्रथमेध्याये चतुर्थः पादः

नमोस्तु गुरुदेवाय विद्वद्भिर्वन्दिताङ्घ्रये ।
सर्वविद्यामहीपाय परमात्मस्वरूपिणे ॥१॥

(अथानुमानिकाधिकरणम् ॥१॥)

प्रतिपादितं श्रौतं ब्रह्म । इदानीमानुमानिकेन गौणेन मानेन सिद्धं भगवतः कपिलस्याभिमतं ब्रह्म प्रत्याख्यातुमाह—

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥१।४।१॥**

एकेषां वेदानुयायिनामेव मत आनुमानिकं कपिलानुकल्पितं प्रधानमेव ब्रह्मेति चेत् । न । कुतः ? शरीररूपकविन्यस्तगृहीतेः । अशरीरिणोपि परमात्मनः शरीरूपकेण विन्यस्तस्य प्रदर्शितस्य गृहीतेः । तथाहि, "ब्राह्मणोस्य मुखमासीत्" इत्यादिना मुखाद्यवयवशून्यस्यापि तस्य मुखहस्तोरुपादादयो रूपकालङ्कारेण प्रदर्श्यन्ते । मनो अस्या अन आसीद्यौः" इत्यादिनापि मनआदिकानि कल्प्यन्ते । "यस्य भूमिः प्रमान्तरिक्षमुतोदरम्" इत्यादिनाप्युदरमूर्धादीनां कल्पना । "यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः[1] ।" इत्यादिनापि चक्षुरास्यादीनां कल्पना । "अनड्वान्दुहे सुकृतस्य लोक एनं प्याययति पवमानः पुरस्तात् । पर्जन्यो धारा मरुत ऊधो अस्य यज्ञः पयो दक्षिणा दोहो अस्य ॥" (अथ०४।११।४) इत्यत्रापि परमात्मनोनुडुच्छब्दवाच्यस्य वायवः स्तनभूताः[2] पर्जन्याः पुष्टिप्रदा धारा

(१) पुनः, नव इतिच्छेदः ।

(२) अनड्वान् विश्वरूपशकटवोढा परमेश्वर एनं जीवं पुरस्तान्मोक्षप्राप्तेः पूर्वमपि पवमानः पवित्रयन्नाप्याययति । सुकृतस्य लोके सुकृतं हि सदाचारपूर्वकपरमेश्वराज्ञानुपालनरूपभक्तिसंसेवनम् । तज्जन्ये लोके मोक्षलोकेपि

यज्ञाश्च दुग्धं दक्षिणा दोहनपात्रमित्यवयवरूपकं सर्वज्ञे सर्वसामर्थ्यसम्पन्ने परब्रह्मण्येव संगच्छते नान्यत्र। ननु यदि निरवयवे ब्रह्मण्यवयवकल्पना नान्याय्या तर्हि कथं नावयवविहीने प्रधान एव सा कल्पना योज्या ? न योज्या। अश्वो योक्तव्य इति कृत्वा न कश्चनामूढस्तं शकटस्य पाश्चात्त्ये भागे योजयति। विषमुपयोक्तव्यमिति कृत्वा न कश्चनाममत्तोमुमूर्षुश्च तदभुङ्क्ते। न हि यत्किञ्चिद्यत्र कुत्रापि योक्तव्यं नियोक्तव्यं च भवति। सर्वत्र योग्यतापेक्ष्यते। चेतनेष्वेव सुरनरगोगजादिष्ववयवा मुखाद्या भवन्ति। ते च चेतन एव कल्पनीया नाचेतने। दर्शयति च। दृशिरवबोधनेत्र। श्रुतिरपि तथैव दर्शयति। याः श्रुतयः पूर्वमुपन्यस्तास्ताः सर्वा ब्रह्मोद्दिश्यैवावयवान् कल्पयन्ति। ब्राह्मणोऽस्य मुखमित्यत्रास्येति पठितम्। अस्येत्यस्य ब्रह्मण इत्येवार्थो न तु प्रधानार्थस्तत्र कथञ्चित्फलति। एवमन्यत्रापि। ननु "अनड्वानिन्द्रः स पशुभ्यो वि चष्टे त्रयां छक्रो वि मिमीते अध्वनः। भूतं भविष्यद्भुवना दुहानः सर्वा

---

दुहे दोग्धि तर्पयति। सिद्धानुवादोयम्। पर्जन्यो वर्षणमस्य धाराः। मरुतो वायव ऊधः स्तनमण्डलम्। यज्ञ उत्कृष्टं कर्मास्य पयः। दक्षिणा उत्साह एवास्य दोहो दोहनपात्रम्।

(१) सोनड्वान विश्वशकट संचालक इन्द्रः परमात्मा पशुभ्यो ज्ञानिभ्यो भक्तेभ्यश्च वि चष्टे विविधं ज्ञानमुपदिशति। शक्रः समर्थः स त्रयांस्त्रीनध्वनो मार्गान् गतीः, ऊर्ध्वगतिं मध्यगतिमधोगतिं च वि मिमीते विशेषेण माति जानातीत्यर्थः। भूतं भूतानि भविष्यद्भविष्यन्ति च भुवना व्रतानि कर्माणि चरति संचालयति।

देवानां चरति व्रतानि ॥ (अथ०४।११।२) इत्यनेन सत्त्वरजस्तमःसाम्यरूपं प्रकृत्यपरपर्यायं प्रधानं शक्रः परमात्मा विमिमीत इति स्पष्टमेव प्रधानं जगत्कर्तृपदमारोपितमिति चेन्न । कौतस्कुतोयं सुतनुर्नवतनुश्च सम्पादितोर्थस्त्वया वेदमन्त्रस्यास्य ? भोः सर्वमत्रैव विद्यते । कामधुग्घि शब्दराशिः । अवश्यं कामधुक्त्वं शब्दानाम् । न परमत्र त्वन्मनीषितोर्थः प्रसूयते । शक्रस्त्रयानध्वनो विमिमीत इत्युक्तम् । सत्त्वरजस्तमांस्येव त्रयोध्वानः । तेषामेव साम्यावस्था प्रकृतिरित्युच्यते । प्रकृतिमेव कापिलाः प्रधानमित्याचक्षते । तस्यापि विमितिकर्तृ ब्रह्मातो न प्रधानमत्र ग्रहीतव्यम् । [1]"सतश्च योनिमसतश्च वि वः" (अथ०४।१।१) इत्यत्रापि ब्रह्मणः प्रधानयोनित्वं प्रतिपादितम् ॥१।४।१॥

ननु सूक्ष्मं हि ब्रह्मेतिसिद्धान्तः । वेदवैदिकावेदितं ब्रह्म तु बृंहणाद्बृहत्वाद्वा मंहिष्ठमेव स्यान्नत्वणिष्ठम् । प्रधानं तु निखिलानुमतं सूक्ष्ममिति । तथा च सूक्ष्मं प्रधानमेव किं न स्याद्ब्रह्मेति सामञ्जस्यं सम्पादयति—

## सूक्ष्मं तु तदर्हत्वात् ॥१।४।२॥

सत्यं बृहदेव ब्रह्म । सूक्ष्मं तु तदर्हत्वात्सूक्ष्मार्हत्वादित्यर्थः । अयमाशयः । अणुरणीयानणिष्ठो महान्महीयान्महिष्ठ इति षड्विधपदार्थवति जगति तस्य समव्यापकत्वं श्रुतिसदाचारसंमतम् ।

---

(१) सतः प्राणिनोसतो जडस्य च योनिमुत्पत्तिस्थानं वि वः, विवृणोति विवृतं करोति ।

न स्यात्सूक्ष्मे सूक्ष्मतरे सूक्ष्मतमे च तस्य व्यापकत्वं यदि तत्सूक्ष्मं न स्यात्। वस्तुतस्तु न विद्यते तस्मिन्सूक्ष्मत्वं बृहत्त्वं वा। सूक्ष्मत्वबृहत्त्वादयो धर्मा भौतिकेषु वस्तुषु सन्ति। तत्तद्वस्तुनि व्यापकतया तत्तत्सूक्ष्मत्वं बृहत्त्वं वोपचर्यते तस्मिन् ॥१।४।२॥

सर्वेषां पदार्थानां प्रधानसहितानां तदधीनत्वं बोधयितुमाह—

## तदधीनत्वादर्थवत् ॥१।४।३॥

सर्वेषां पदार्थानां तदधीनत्वाद्ब्रह्माधीनत्वादर्थवत्तदिति सूत्रार्थः। "स भूमिं विश्वतो वृत्वात्यतिष्ठत्" (ऋ०१०।९०।१) "उतामृतत्वस्येशानः" (ऋ०१०।९०।२) ततो विष्वङ् व्यक्रामत्साशनानशने अभि" (ऋ०१०।९०।४) "ईशान इमा भुवनानि ईयसे" (साम०उ०३।अर्ध०२।१) इतिश्रुतिवचनैः सर्वे हि पदार्थास्तदधीना इति गम्यते। अत एव तस्यार्थवन्नाम। ईष्टे इति ईशानः। सर्वेषां स परमात्मेष्टेतो डित्थकपित्थादिवन्न नैरर्थक्यं तन्नाम्नि ॥१।४।३॥

इतोपि न प्रधानं ब्रह्म—

## ज्ञेयत्वावचनाच्च ॥१।४।४॥

ज्ञेयं हि ब्रह्म भवति। तज्ज्ञानादेवाविज्ञातकालतः प्रवृत्तानां सर्वक्लेशलेशानामवसानमितिवैदिकः पन्थाः। "यस्तन्न वेद किमृचा करिष्यति" (ऋ०९।१०।१८) इति हि वेदोपालम्भमुखेन ब्रह्मणो ज्ञेयत्वं सर्वेषां ज्ञानं संनिधत्ते। न तथैव प्रधानस्य ज्ञेयत्ववचनमुपलभ्यते। न च "संभूतिं च विनाशं च

यस्तद्वेदोभयं सह। विनाशेन मृत्युं तीर्त्वा संभूत्यामृतमश्नुते ॥" (शु०य०४०।११) इत्यनेन संभूतिवेदनमुपदिश्यत एवेति वाच्यम्। अत्र संभूतिपदेनानुभवारूढभवसंभवैकहेतोः परमात्मन एव वचनात्। न च जगत्सम्भवस्य परमात्मनि कारणत्वस्वीकारे जन्यजनकभावभावनीयत्वस्यानिवार्यतया भेदवादोत्थितिरिति वाच्यम्। इष्टापत्तेः। विभवनस्य संभवनस्य चोभयोरपि वेदेषु प्रसिद्धतया नैकतरस्यैव हानोपादानयोः वृत्तिप्रवृत्ती संभवेतां संभावितानां तटस्थानां विवेकिनाम्। न च प्रधानाज्जायमानानां पदार्थानां विनाशित्वदर्शनाद्विनाशसहचारेण संभूतिपदेन प्रधानस्यैव ग्रहणस्यौचित्यमिति वाच्यम्। ब्रह्मज्ञानादिव प्रधानज्ञानान्मुक्तेरप्रतिपादनात्। "ततो भूय इव ते तमो य उ संभूत्यां रता" इतिविनाशश्रवणाच्च। समीहितलाभायैव प्रवृत्तिः प्राणिनां दृश्यते। न च विनाशः समीहितः। इत्यलमतिप्रसङ्गेन ॥१।४।४॥

पूर्वपक्षिण उत्तरमाक्षिप्य परिहरति—

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥१।४।५॥

कपिल आह प्रधानस्य ज्ञेयत्वं वदत्येव श्रुतिरिति। का सा श्रुतिस्तद्वादिनी ? उच्यते। "इयं पित्र्या राष्ट्र्येत्वग्रे प्रथमाय जनुषे भुवनेष्ठाः। तस्मा एतं सुरुचं ह्वारमह्यं धर्मं श्रीणन्तु प्रथमाय धास्यवे ॥" (अथ०४।१।२) इति। पित्र्या पितुरुत्पन्नेयं राष्ट्री शोभमाना प्रकृतिः प्रथमाय जनुषे जनिमते महत्तत्त्वाय भुवनेस्मिञ्जगति स्था अस्तीति श्रुतिपूर्वार्धेन प्रकीर्ति-

तैव। तस्या एव प्रथमो जनिमान्महान्। "प्रकृतेर्महान्" इति-कापिलस्मृतेः। "स हि देवः स पृथिव्या ऋतस्था मही क्षेमं रोदसी अस्कभायत्। महान्मही अस्कभायद्विजातो द्यां सद्म पार्थिवं च रजः॥" (अथ०४।१।४) इत्यस्मिन्मन्त्रे "स हि महान्" इतिप्रकृतेः प्रथमजनिमतो महत एव निर्देशः। "प्र यो जज्ञे विद्वानस्य बन्धुर्विश्वा देवानां जनिमा विवक्ति॥" (अथ० ४।१।३) इत्यस्य योस्य महतो महत्तत्त्वस्य बन्धुः सम्बन्धी पुत्र इति यावत्, प्रजज्ञेहङ्कार उत्पन्नवान्, तस्याहङ्कारस्य विद्वान्, विश्वेषां देवानामिन्द्रियाणां जनिम जन्म विवक्ति स्पष्टतः कथयतीत्यक्षरार्थः। प्रकृतेः प्रथमः पुत्रो महान्। महतः पुत्रोहङ्कारः। स एव बन्धुशब्देनेहाभिहितः। तस्य विद्वान्, तमहङ्कारं यो विजानाति स सर्वेषामिन्द्रियाणां जन्म स्पष्टतो जानाति। अहङ्कारात्पञ्चतन्मात्राण्युत्पन्नानीन्द्रियरूपान्देवाञ्ज-नयन्तीति तस्य विद्वानेव जानाति। "योथर्वाणं पितरं देवं बन्धुं बृहस्पतिं नमसाव च गच्छात्" (अथ०४।१।७) इत्यस्मिन्मन्त्रेपि देवानामिन्द्रियाणां बन्धुत्वसम्पादकानि पञ्चत-न्मात्राण्येवाभिहितानि। तेषां पितरमथर्वाणमविनाशिनं प्रधान-मिति यावत्, यो नमसा अव गच्छात् इत्यादिरूपेण तद्वेदन-मावेदितमेव। यद्यप्यत्र तन्मात्राणां पिताहङ्कार एव, परं नासावथर्वा। सर्गावसर एव स जायते विनङ्क्ष्यतश्च जगतः पूर्वमेव विनश्यति। अतोथर्वेतिनिर्देशेनाविनाशी पिता तु प्रधानमेव। तदेवाजापदवाच्यम्। अजामेकां लोहितशुक्ल-

कृष्णाम्" इति तैत्तिरीयारण्यकवचनात् । न जायत इत्यजा । प्रथमविकारनिषेधः । जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति षड्विकारान्वार्ष्यायणिर्मन्यते । प्रथमविकार-निषेधात्तदुपजीवकसर्वविकारनिषेधः । एवं च प्रधानस्यैवाथर्व-पितृत्वं न तद्विकारस्य महत्तत्त्वस्येति । एवं च "विद्वान्" "नमसाव च गच्छात्" इत्यादिना प्रधानस्य ज्ञेयत्वं वदति श्रुतिरिति चेन्न । कुतः ? प्राज्ञो हि प्रकरणात् । हिरेवार्थे । प्रक-रणपर्यालोचनात्तत्र प्रतिपादितो ज्ञेयः प्राज्ञ एव परमात्मैवे-त्यर्थः । एवं हि तत्प्रकरणपर्यालोचना । "ब्रह्म जज्ञानम्" इति मन्त्रे चरमभागे सतश्चासतश्च मूलकारणाववोधनं विहितम् । असतो जडस्य मूलकारणं भवतु नाम कथंचित्प्रधानम् ; कथं तु तद्भवेत्सतः कारणम् ? "ब्रह्म ब्रह्मण उज्जभार" (अथ०४।१।३) इत्यपि तत्रैवोक्तो ब्रह्मणो ब्रह्मप्रकाशो जडे न संभवति । अतो न तत्प्रधानप्रतिपादकं प्रकरणम् ॥१।४।५॥

प्रकरणं स्मारयितुमाह—

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥१।४।६॥

त्रयाणामेव तत्त्वानां तत्रोपन्यासः । कानि तानि त्रीणि तत्त्वानि ? उच्यन्ते । पित्र्येत्यनेनाचित्तत्त्वमुच्यते । पितुरिय-मितिपित्र्या । अचिदपि सर्गारम्भे ब्रह्मसंकल्पाज्जायमानेव प्रतीयते कार्याय च भवति । "प्र यो जज्ञे विद्वानस्य बन्धुः" इत्यनेन चित्तत्त्वं प्रतिपाद्यते । चितोऽपि नित्याः सत्योऽपि सृष्टिसमये ब्रह्मसंकल्पादेवोत्पद्यमाना इव स्थूलजगत्सम्बन्धा-

त्स्थूलत्वमुपयन्त्य इव प्रतीयन्ते। "स हि दिवः स पृथिव्या ऋतस्थाः" इत्यनेन परं ब्रह्मैवाभिधीयते। परमात्मैवर्तस्था भवितुमर्हति। ऋते परमसत्ये तिष्ठतीति "ऋतस्थाः"। अथवा परमसत्यः संस्तिष्ठतीत्यृतस्थाः। नैतद्विशेषणं प्रधाने कथमपि संगच्छते। न हि नित्यं परिणमत्किञ्चित्परमसत्यं भवितुमर्हति। सर्वविकारास्पृष्टत्वमेव परमसत्यत्वम्। प्रश्नश्च। प्रश्नोपि त्रयाणामेव। इयं पित्र्येत्यादिमन्त्रेषु प्रदर्शितोपदेशवचनसामर्थ्यात्तादृशा एव प्रश्नाः परिकल्पनीयाः। अथवा "बृहन्तो नाम ते देवा ये ऽसतः परिजज्ञिरे। एकं तदङ्गं स्कम्भस्यासदाहुः परो जनाः॥" (अथ० १०।७।२५) इतिमन्त्रेसच्छब्देन प्रधानमुच्यते तत एव बृहतां देवानां जनिः प्रतिपाद्यत इत्येवं पूर्वपक्षमुद्भाव्योत्तरमुच्यते त्रयाणामेवेति। त्रीणि तत्त्वान्येवात्रापि प्रतिपादितानि। असच्छब्देनाचित्, जना इत्यनेन चितः, तदङ्गमित्यत्र तच्छब्देन ब्रह्म। कथं ज्ञायते तत्र त्रयाणां तत्त्वानामुपन्यास इति? प्रश्नश्च। त्रयाणामेव प्रश्नोस्मिन्सूक्ते। "(१)यत्र लोकांश्च कोशांश्चापो ब्रह्म जना विदुः। असच्च यत्र सच्चान्तं स्कम्भं तं ब्रूहि कतमः स्विदेव सः॥" (अथ० १०।७।१०) इत्यादिभिर्बहुभिर्मन्त्रैस्तत्त्वत्रयसम्बद्धा एव

---

(१) यत्र जनास्तत्त्वदर्शिनो लोकान्भूर्भुवरादीन् कोशान्देहान्मानवादीन् अपांसि कर्माणि जगदुत्पादनरक्षणप्रलयनादीनि ब्रह्म वेदमृगादिकं विदुर्विदन्ति, यत्र चासज्जडजातं सदजडजातमन्तममति गच्छति प्राप्नोति तं स्कम्भं सर्वाधारभूतमद्भुतं वस्तु ब्रूहि। कतमः स्विदेव सः, स कोस्तीतितात्पर्यम्।

प्रश्ना इति प्रकारान्तरेण व्याख्येयमिदं सूत्रम् ॥१।४।६॥

पुनरपि प्रधानस्याब्रह्मत्वं प्रतिपादयति—

## महद्वच्च ॥१।४।७॥

महदिवेति महद्वत् । चः समुच्चायकः । यथा "स हि दिवः" इति मन्त्रे "महान्" इतिमहच्छब्दो न सांख्याभिमतं प्रधानमभिधत्त एवं ,'बृहन्तो नाम ते देवाः" इतिमन्त्रेपि समायातोसच्छब्दो न प्रधानमभिधावति । एतावता नानुमानिकं सांख्यसमुद्भावितं प्रधानं ब्रह्मपदवीं स्प्रष्टुमपीष्टे इति साधितम् ॥१।४।७॥ इत्यानुमानिकाधिकरणम् ॥१॥

( अथ चमसाधिकरणम् ॥२॥)

प्रधानमेव प्रधानं शत्रुर्वेदान्तस्येति पुनस्तस्यैव निरासे मतिमायासयति—

## चमसवदविशेषात् ॥१।४।८॥

चमसः पानपात्रं देवानाम् । "चमसो देवपान इति । चमसेन ह वा एतेन देवा भक्षयन्ति तस्मादाह चमसो देवपान इति ।" (शत० १।३।४।१४) इतिशतपथकथनात् । चमस इवेति चमसवत् । अविशेषात्=सामान्यात् । इदमत्र तत्त्वम् । एवमत्र विवदते प्रधानवादी, वेदशब्दप्रमाणप्रमाणित एवायं प्रधानवादः । तथा हि मन्त्रः, "[1]अजारे पिशङ्गिला श्वावित्कुरु

(१) अजाजनिमती पारमेश्वरी शक्तिरेव पिशङ्गिला पिशानि रूपाणि नामानि च नामरूपात्मकं निखिलं जगदित्यर्थः, गिलतीति पिशङ्गिला ।

पिशङ्गिला । शश आस्कन्दमर्षत्यहिः पन्थां विसर्पति ॥" (शु० य०२३।५६) इति । इतः पूर्वस्मिन्मन्त्रे "का ईमरे पिशङ्गिला" इति प्रश्नः । तदुत्तररूपेण पठितम् "अजारे पिशङ्गिला" इति । अरे, अजा पिशङ्गिलेति । किमिदं पिशङ्गिलेति ? पिशानि रूपाणि गिलति गलादधोवतारयति या सा पिशङ्गिलेति । अजाविशेषणमेतत् । पिशङ्गिलेति कारणनिर्देशः । यद्यस्मादुत्पद्यते तत्तस्मिन्नेव लीनातीतिनियमादजात उत्पन्नानि रूपाणि प्रलयावस्थायां मध्ये मध्येपि च तस्यामेव लीनानि भवन्तीति जगत्कारणीभूताजा=प्रकृतिः प्रधानमेवात्र निर्दिश्यते । ततः प्रधानवादो नाशब्द इति । समाधत्ते । चमसवदविशेषात् । यथा वेदे श्रुतश्चमसशब्दो न याज्ञिकानां चमसरूपस्य देवपानस्योपासनाप्रकरणे वाचकस्तदविशेषात्तत्सामान्यात्=तथैव नायमजाशब्दः प्रधानस्य सांख्यप्रसिद्धस्य वाचकः । न हि स्वातन्त्र्येण सर्वः शब्दः सर्वमर्थमभिधातुं समर्थः । अर्थाभिधाने प्रकरणमपेक्ष्यते । न हि भोजनावसरे सैन्धवमानयेत्युक्तोश्वमानीय कृती भवति किङ्करः । न वा बहिर्गमनावसरे तथोक्तः स लवणमानीय कौशल्यं कलयति । एवमजाशब्दोत्र न प्रधानवाचकः । कस्य तर्हि ? परस्य ब्रह्मणः सर्वादिनी मायैवात्रोच्यते । तिष्ठतु तावदिदमिदं

---

श्वाविच्छ्वोभाविनमर्थं वेत्तीति श्वावित्सैव शक्तिः कुरुपिशङ्गिला कृत्वा कृत्वा सर्वं गिलति । शशः शीघ्रगतिकः परमात्मास्कन्दमास्कद्यास्कद्य सर्वानेव पदार्थान्स्वायत्तीकृत्यार्षति गच्छति । अहिर्गतिशून्योपि पन्थां पन्थानं विसर्पति गच्छति । तन्माहात्म्यद्योतनार्थमिदम् ।

तु वक्तव्यं कुत्र श्रुतश्चमसशब्दः । उच्यते । [1]"न निन्दिम चमसं यो महाकुलोऽग्ने भ्रातर्द्रुण इद्भूतिमूदिम ।" (ऋ०१।१६१।१)[2] एकं चमसं चतुरः कृणोतन तद्वो देवा

(१) महाचार्येण साक्षात्कारितं परमात्मानमुद्दिश्य शिष्य आचार्यमेव पृच्छति यो नोस्मानाजगन् आगतः प्राप्तः स किमु श्रेष्ठो ज्येष्ठः किं वा यविष्ठो युवतमः ? स परमात्मा ज्येष्ठः किमित्यनेन तन्नित्यत्वजिज्ञासा । यदि स नित्यो ज्येष्ठ एव । स यविष्ठः किमित्यनेनानित्यत्वजिज्ञासा । यदि सोनित्य इदानीमेव तपोवलादिहोत्पन्नस्तर्ह्यनित्यः सन्यविष्ठ एव । आगतः स किं दूत्यं दूतकर्मयत गच्छति प्राप्स्यति । यथा दूतः कश्चिन्नयति कञ्चित्, एवं स स्वमस्मान्नेष्यतीति तदौदार्यजिज्ञासा । यद् ऊचिम ब्रूमःतत् कत् कथं निर्णेयम् ? स नित्यो वानित्यो वोदारो वानुदारो वेति कथं निर्णेतव्यम् ? यूयमद्यावधि तमात्मानं न वित्थेति न निन्दिम युष्मान्न निन्दामीत्याचार्यवचनम् । हे अग्ने हे भ्रातः प्राप्तप्रकाश वत्स ! तं चमसं सर्वभक्षकं प्रलयकर्तारं परमात्मानमूदिम वदामि कथयामि तुभ्यम् । कीदृशं चमसम् ? भूतिम् उत्पादकं सर्वेषाम् । स एवोत्पादकः स एव च विनाशको जगत इतिभावः । कीदृशः सः ? यो महाकुलः कुलीनः । अथवा महसा आकुलो महाकुलः । छान्दसः सकारलोपः । प्रकाशस्वरूप इत्यर्थः । किं च द्रुणो गतिशील इत् । नैकत्र निवसति सर्वत्र तदावासो व्यापक इत्यर्थः । यतः स परमात्मेदृशोतो युष्मत्तः श्रेष्ठोपि सर्वदाजरत्वाद्यविष्ठोपि । स च महाकुल इति स्वाभाविकेनौदार्येण त्वां युष्मान्वा स्वपदं नेष्यत्येवेतिभावः ।

(२) हे वत्साः, एकं चमसमेकमेव तं परमात्मानं चतुरः चतुःसंख्याकान् कृणोतन कुरुत जानीतेतिभावः । कथं तस्य चतुःप्रकारत्वम् ? सृष्टिकर्तृत्वेन तद्रक्षणकर्तृत्वेन तत्प्रलयकर्तृत्वेन तटस्थत्वेन चेति । तदेतदेव देवा अनुभविनो वो युष्मानब्रुवन् ब्रुवते वक्ष्यन्ति च । तदेतदेव वक्तुमुपदेष्टुं वः समीपेहमप्यागमम् । युष्मान् प्राप्तोस्मीति भावः । हे सौधन्वनाः शुभाचरणशीला यदि एवं एवं करिष्यथ मदाज्ञानुसारेण वर्तिष्यध्वे अथ तर्हि देवैर्ज्ञानिभिः साकं यज्ञियासस्तत्प्राप्तियोग्या भविष्यथ ।

अग्रुवन्तद आगमम् ॥" (ऋ० १।१६१।२) [1]"उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् । अकर्त चतुरः पुनः ॥" (ऋ० १। २०।६) [2]"तिर्यग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम् । तदासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥" (अथ० १०।८।९) इत्याद्याः । "अर्वाग्बिल" इति मन्त्रस्योत्तरार्धे "तस्याऽऽसत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानः" इति वाजसनेयिनां पाठः । यदि नायमत्र श्रुतश्चमसशब्दः पात्रविशेषमभिधत्ते कस्मिन्नर्थे तर्हि नियम्यत एषः ? उच्यते । अदनार्थकचमुधातोर्निष्पन्नस्य चमसशब्दस्य शिरो मुखं वार्थः । चमति भक्षयत्यनेनेति चमसः । मुखशब्देन शिरः शिरश्शब्देन च मुखमभिधीयते वेदे । तथाहि "ब्राह्मणोस्य मुखमासीद्" इत्यत्र ब्राह्मणे ब्रह्ममुखजत्वमभिधाय न किञ्चिद्गौरवं वर्धयितुं प्रदर्शयितुं वा शक्यते । अतस्तत्र शिर एव मुखमित्यनेनाभिधित्सितम् । शिरस्तु सर्वेषां ज्ञानतन्तूनां केन्द्रस्थानम् ।

---

(१) त्वष्टुः सूक्ष्मतत्त्वदर्शिनो देवस्य विदुषो निष्कृतमुत्पादितं सम्पादितमवगतमित्यर्थः, त्यं तं नवं नव्यं स्तुत्यं चमसं भक्ष्यं प्राप्यं पुनः चतुरः चतुःप्रकारान् स्रष्टेति रक्षितेति प्रलयितेति तटस्थश्चेति चतुर्विधान् अकर्त जानीत।

(२) तिर्यग्बिलस्तिर्यञ्चि बिलानि यस्मिन् सः, ऊर्ध्वबुध्न ऊर्ध्वमुपरिभागे बुध्नो मूलं यस्य स चमसोन्नादिभक्षको देहो वर्तते । तस्मिन् देहे विश्वरूपं यशो यशस्वि ब्रह्म निहितं विद्यते । तद्ब्रह्म सप्त ऋषयः पञ्च ज्ञानेन्द्रियाणि मनो बुद्धिश्चेति साकम् आसत उपासते तदाज्ञावर्तित्वमङ्गीकृत्य तिष्ठन्ति । य ऋषयोस्य महतो महनीयस्य देहस्य गोपा रक्षका बभूवुर्भवन्ति । यद्यपि गोपेत्यत्र गोशब्देनेन्द्रियाणामेव प्रसिद्ध्या ग्रहणं तथाप्यत्र वृत्तौ नावयवार्थप्रवृत्तिः ।

तत एव सर्वानुपदिशति ब्राह्मणो ज्ञानम् । तत एव च तस्य श्रैष्ठ्यम् । एवमत्रापि शिरोमुखयोरन्यतराभिधाने न काचिदनुपपत्तिः परिकल्पनीया । निघण्टौ तु चमसशब्दो मेघनामसु पठितः । "त्वष्टुर्देवस्य निष्कृतम्" इतिश्रुतौ न हि तक्षणव्यापारवांस्त्वष्टाभिधीयत इति तु न विस्मर्तव्यम् । अयं भूस्थानदेवता वा मध्यमस्थानदेवता वा द्युस्थानदेवता वेति प्रासङ्गिकम् ॥१।४।८॥

न हि कापिलैः कृतार्थिता व्यर्थिता च व्यासेन सा वराक्यजा स्वातन्त्र्येण विधृतस्वसत्ता भवितुमर्हतीत्युच्यते—

## ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥१।४।९॥

ज्योतिःशब्देन प्रकाशस्वरूपं ब्रह्मोच्यते । उपक्रम आरम्भ आदिकारणमित्यर्थः । ज्योतिः परमात्मोपक्रम आदिकारणं यस्याः सा ज्योतिरुपक्रमा । अजा न स्वतन्त्रा, ज्योतिरुपक्रमा हि सा । तथा हि एक ऋषयोधीयते "ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमत०" इत्याद्यधीयाते बृहस्पतिरादित्यश्च । "यः प्राणतो निमिषतो महित्वैको राजा जगतो बभूव" (अथ०४।२।२) इति च वेनोधीते । सर्वत्रैव ब्रह्ममाहात्म्यातिक्रान्तत्वं प्रधानस्योपवर्ण्यतेतो न स्वातन्त्र्येण कार्यकारित्वं तस्य कुत्रापि वेदे प्रतिपादितम् ॥१।४।९॥

नन्वजाया अपि किञ्चित्कारणं नियामकं वा चेत्कथं तस्या अजेत्यभिधानसार्थक्यमत आह—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१।४।१०॥

कल्पनं सृष्टिः । कल्पनस्योपदेशः कल्पनोपदेशस्तस्मात् ।

विरोधपरिहारसमर्थश्चकारः। सृष्टेरुपदेशः श्रूयते वेदे। तथाहि, "इयं विसृष्टिर्यत आ बभूव" (ऋ०१०।१२९।७) इति। तैत्तिरीयब्राह्मणे (२।८।९।६) पीयं श्रुतिः। सृष्टिकल्पनोपदेशः श्रूयते तेन को लाभो लब्धो भवता ? उच्यते। सृष्टिकाल इयं विविधै रूपैर्जायमानेव प्रतीयमानेवापि प्रलयकाले विश्वम्भरेण ब्रह्मणा सह तत्स्वरूपापन्नाविभक्तनामरूपगुणा चावतिष्ठत इत्यजा। अथवा न हि नियाम्यत्वेनैव तस्या अजात्वं विहन्यते। जीवोप्यजः। स च ब्रह्मणो नियाम्य एव। नात्र कश्चिद्विरोधः। तथापि पूर्वकल्पमनुसृत्य परिहरति मध्वादिवदविरोध इति। "तद्यजुस्तद्धैतन्मध्वेवैष तृचो रसो वै मधु०" (शत०७।४।१।४) "अयं लोको बर्हिः" (शत०१।३।३।२४) "आपो हि कुशाः" (शत०१।२।४।३) "क्षत्रं वै जुहूर्विश इतराः स्रुचः" (शत०१।३।१।१५) "गृहा हि पशवः" (शत०१।६।४।१४) "यज्ञो वै विष्णुः" (शत०१।१।२।१३) "वज्रो वा आज्यम्" (शत०१।४।४।४) "वज्रो वा आपः" (शत०१।१।१।१७) इत्यादिषु यथातथात्वेपि तथात्वारोपस्तथानजात्वेप्यजात्वारोपः। वस्तुतस्त्वचिन्त्यशक्तिनः परस्य ब्रह्मणः सर्वनामरूपगुणादिप्रसविनी माययेवाजा। तेन न तस्या अजात्वे विवादावकाशः ॥१।४।१०॥ इति चमसाधिकरणम् ॥२॥

( अथ संख्योपसंग्रहाधिकरणम् ॥४॥ )

पुनरपि सांख्यसंस्कृतं चतुर्विंशतितत्त्वात्मकं सिद्धान्तं दूषयितुमाह—

न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १।४।११॥

संख्याया उपग्रहः संख्योपग्रहस्तस्मादपि सांख्यमतमनभिमतं वेदस्य। अत्रायमाशयः। वाजसनेयिनः पठन्ति "एकयास्तुवत प्रजा अधीयन्त, तिसृभिरस्तुवत ब्रह्मासृज्यत, पञ्चभिभिरस्तुवत भूतान्यसृज्यन्त, सप्तभिरस्तुवत सप्तऋषयोऽसृज्यन्त, नवभिरस्तुवत पितरोऽसृज्यन्त, एकादशभिरस्तुवत ऋतवोऽसृज्यन्त, त्रयोदशभिरस्तुवत मासा असृज्यन्त, पञ्चदशभिरस्तुवत क्षत्रमसृज्यत, सप्तदशभिरस्तुवत ग्राम्याः पशवोऽसृज्यन्त, नवदशभिरस्तुवत शूद्रार्यावसृज्येताम्, एकविंशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त, त्रयोविंशत्यास्तुवत क्षुद्राः पशवोऽसृज्यन्त, पञ्चविंशत्यास्तुवतारण्याः पशवोऽसृज्यन्त, सप्तविंशत्यास्तुवत द्यावापृथिवी व्यैतां, नवविंशत्यास्तुवत वनस्पतयोऽसृज्यन्त, एकत्रिंशतास्तुवत प्रजा असृज्यन्त, त्रयस्त्रिंशतास्तुवत भूतान्यशाम्यन्" (शु०य० १४।२८-३१) इत्यादि। अत्रैकतः प्रारभ्य त्रयस्त्रिंशत्पर्यन्तानां संख्यानामुपसंग्रहः सृष्ट्युत्पत्तिश्च श्रूयेते। तत्र सांख्या एवमाशेरते—मासानन्तरेणर्तूनामसंभवाद् "नभश्च नभस्यश्च वार्षिकावृतू" "इषश्चोर्जश्च शारदा ऋतू" इतिवन्माससंख्यानेनैवर्तुसंख्यानस्य गतार्थत्वात्ते पृथङ्न गणनीयाः। एवमेकयेति त्रिंशतेति द्विः प्रजासृष्टिः श्रूयते। तत्रान्यतरा हेया। एवमेकविंशत्यैकशफानां पशूनां सृष्टिः श्रूयते सापि त्या-

ज्या। ग्राम्यारण्यपशूनां सृष्टावेव तेषां गतार्थत्वात्। त्रयस्त्रिंशतेति त्याज्यमेव सृष्टिप्रसङ्गबहिर्मुखत्वात्तस्य। एवं च पञ्चविंशतिपर्यन्ता एव संख्या अवशिष्यन्ते। ताश्च पञ्चविंशतेस्तत्त्वानामुपलक्षिकाः। तदिदं प्रत्याचष्टे भगवान्व्यासः, संख्योपसंग्रहादपि न सांख्यमतं सिद्धम्। कुतः? नानाभावात्— एकस्यैव वस्तुनः प्रकारान्तरेण पुनःपुनरुपवर्णनात्। तथाहि प्रजासृष्टावेव ब्रह्मक्षत्रशूद्रार्याणां सृष्टेर्गतार्थत्वादपि पृथक्पृथक् चतुर्णां सृष्टिः समुपवर्णिता। एवं च निरर्थकतया तेषां त्याज्यतया त्वन्मनीषितसंख्याहानिरेव। यदि तेषां सृष्टेः पृथग्गणना तवाभिमता तर्हृतूनां मासानां वनस्पतीनां चापि पृथग्गणनायां न कोपि प्रत्यवायः। एवं च तवाभिमतसंख्यातिरेकः सम्पद्येत। तदेवाहातिरेकाच्चेति ॥१।४।११॥

किंच—

## प्राणादयो वाक्यशेषात् ॥१।४।१२॥

यदि माध्यन्दिनानामुपर्युक्ताः श्रुतयः सृष्टिप्रक्रियायां प्रधानवादिसंमततत्त्वसंख्यानुसन्धाने च प्रवृत्तास्तर्हि प्राणादीनामपि सृष्टिर्वक्तव्या प्रकरणान्न्याय्याच्च। तदेव कथयति सूत्रकारो वाक्यशेषादिति। प्राणादयो वाक्यशेषा एव। प्राणादीत्यत्रादिपदेनेन्द्रियाण्यन्तःकरणानि च संग्राह्याणि। एतेषामपि तत्र पाठः कर्तव्यः। एवं च भज्येतैव त्वत्संख्यागणनाभिमान इति भावः ॥१।४।१२॥

किं च,

## ज्योतिषैकेषामसत्यन्ने ॥१।४।१३॥

अन्नेन्नपाठेसति ज्योतिषा सह तस्य पाठोप्यपेक्षितव्य इत्येकेषामाशयः । अयं भावः । "एकत्रिंशतास्तुवत प्रजा असृज्यन्त यवाश्चायवाश्चाधिपतयः" इत्यत्र यवादीनामन्नानामपि सृष्टिवर्णनम् । तच्च प्रधानवादिना पञ्चविंशतिसंख्योपग्रहलोभेन परित्यक्तम् । एवं चान्नसृष्टिरप्यपेक्षिता । ज्योतिःशब्देन सूत्रे सूर्याग्निविद्युदादीनां संग्रहः । तेषामपि सृष्टिर्वक्तव्या । एवं च "असति अन्ने" ज्योतिषा सहान्नसृष्टिन्यूनता प्रदर्शनीया। ज्योतिःसृष्टिन्यूनतान्नसृष्टिन्यूनता च प्रदर्शनीयेति तात्पर्यम् । तथा कृते तु संख्यातिरेक एव स्यात् ॥१।४।१३॥ इति संख्योपसंग्रहाधिकरणम् ॥३॥

( अथ कारणत्वाधिकरणम् ॥४॥ )

वेदेषु ब्राह्मणेषूपनिषत्सु च बहूनि बहुप्रकाराणि जगत्कारणानि श्रूयन्ते । तत्रासतोपि जगदुत्पद्यमानं श्रूयते । एवं चासत्प्रधानं जगत्कारणं वैदिकशब्देनैव सिद्धमिति पिष्टमेव पुनः पेष्टुं निष्प्रयोजनमपि सप्रयोजनमिव मत्वालमनलसो भगवान् व्यास आह—

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १।४।१४॥

"तपसस्तन्महिनाजायतैकम्" (ऋ०१०।१२९।२) इत्यनेन

तपसो जगदुत्पत्तिः, "रोहितो द्यावापृथिवी जजान" (अथ० १३।१।६) इत्यनेन रोहितात्सूर्यात्, "ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत" (ऋ०१०।१९०।१: तै०आ०१०।१।१३) इत्यनेनापि तपसः, "त्वामिमा ओषधीः सोम विश्वास्त्वमपो अजनयंस्त्वं गाः। त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ॥" (शु०य० ३४।२२) इत्यनेन सोमात्, "स प्रजापतिः सुवर्णमात्मन्नपश्यत्तत्प्राजनयत्" (अथ०१५।१।१) इत्यनेन प्रजापतेः, "ततो विराडजायत विराजः" (शु०य०३१।५) इत्यनेन विराजः, "सुभूः स्वयम्भूः प्रथमोन्तर्महत्यर्णवे। दधे ह गर्भमृत्वियं यतो जातः प्रजापतिः॥" (शु०य०२४।६३) इत्यनेन स्वयम्भुवः, "प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव" (शु०य०१०।२०) इत्यनेन प्रजापतेः, "आत्मन आकाशः सम्भूतः" (तै०उ०२।१) इत्यनेनात्मनः, "असद्वा इदमग्र आसीत्। ततो वै सदजायत" (तै०उ०२।७) इत्यनेनासतः, "बृहन्तो नाम ते देवा येऽसतः परिजज्ञिरे।" (अथ० १०।७।२५) इत्यनेनाप्यसतः, "प्रजापतिर्वा इदमग्र आसीदेक एव सोकामयतान्नं सृजेय प्रजायेयेति स प्राणेभ्य एवाधि पशून्निरमिमीत" (शत०७।४।२।६) इत्यनेन च प्रजापतेर्जगतः प्रसवः श्रूयते। अत्रासतोपि जगदुत्पत्तिः श्रूयते तेनासतः प्रधानस्य जगत्कारणत्वं विवादानाकुलितमितिमतिमपसारयितुमाहाचार्यः कारणत्वेनेत्यादि। सूत्रार्थस्तु—आकाशादिषु कार्येषु कारणत्वेन सर्वत्र यथाव्यपदिष्टोक्तेः=व्यपदिष्टमनतिक्रम्य यथाव्यपदिष्टम्।

यथाव्यपदिष्टमुक्तिर्यथाव्यपदिष्टोक्तिस्तस्याः । सर्वत्रैव समानव्यपदेशः । एकस्मिन्मन्त्रे यथा व्यपदेशस्तमनतिक्रम्यैवान्येष्वपि मन्त्रेषु श्रौतवाक्येषु च । आकाशादिशब्दानामपि ब्रह्मपरकत्वमेवेति गतेष्वधिकरणेषु हस्तदर्पणायितमिति नास्ति नानाकारणत्वदर्शनम् ॥१।४।१४॥

उक्तोत्तरमेव विस्पष्टयति—

## समाकर्षात् ॥१।४।१५॥

समाकर्षणं समाकर्षस्तस्मात्। आकाशादिषु शब्देषु यत्र यत्र भ्रान्तिर्विभिन्नकारणतायास्तत्र सर्वत्र ब्रह्मण एव समाकर्षः। स च सामर्थ्यादेव। सामर्थ्यं त्वसकृत्प्रत्यपीपदाम । "असद्वा इदमग्र" इतिश्रुतौ नासतः सदुत्पत्तौ तात्पर्यम् । "बृहन्तो नाम ते देवा" इत्यत्रापि तथैव । तत्रासच्छ्रुतिस्तु तदानीं सृष्टेः प्राग्ग्राहकाभावाद्ब्रह्मणोऽग्राह्यत्वेन ब्रह्मवादिन्येव विज्ञेया। अथवा सदित्यस्य सत्तामात्रमित्यर्थः । अस्तीत्यसत् । अल्लोपाभावस्तु च्छान्दसः। ततश्चासत इत्यस्य सत्तामात्रेण वर्तमानाद्ब्रह्मणः सत्-नामरूपादिमद्वस्तुजातमजायतेति श्रुत्यर्थोऽन्यत्र निरूपितस्तत्रैव द्रष्टव्यः ॥१।४।१५॥

ननु किं कारणं तत्र तत्र श्रौतैराकाशादिशब्दैः परं ब्रह्म समाकृष्यत इत्याह—

## जगद्वाचित्वात् ॥१।४।१६॥

जगद्वाचित्वाद्ब्रह्मणः। ब्रह्मैव जगद्रूपेण परिणतमिति वा

ब्रह्मण एव विवर्तो जगदिति वा वेदान्तिनां संस्था। अतो जगद्ब्रह्मैव ब्रह्मणो रूपं वेत्युभयं समानम्। तेन जगद्ब्रह्मणोः कार्यकारणभावत्वेपि समानार्थकतया जगदन्तर्गताकाशादिशब्दैर्ब्रह्मैव बोध्यत इति तदेवाकृष्यते मोक्षप्रकरणेषु ॥१।४।१६॥

अत्रैव विवदमानानुद्दिश्याह—

**जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्**

**॥१।४।१७॥**

सूत्रे प्राणशब्द उपलक्षणविधया सर्वानेवाकाशादिभौतिकपदार्थानाह। जीवश्च मुख्यप्राणश्चेति जीवमुख्यप्राणौ। तयोर्लिङ्गम्। तस्मात्। जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च न ब्रह्मणः समाकर्षो युक्त इति चेत्, तद्व्याख्यातम्=दत्तोत्तरं हि तत्। तथाहि, नोच्यते सर्वत्रैव जीवलिङ्गं मुख्यप्राणादिलिङ्गं च नादर्तव्यमिति। वाक्यार्थनिर्णयनयप्रणेतॄणि च लिङ्गानि षट्। तानि च "उपक्रमोपसंहारावभ्यासो पूर्वता फलम् अर्थवादोपपत्ती चेत्येवंरूपाणि। यत्रोपक्रमोपसंहारयोरानुकूल्यं न व्याकुलीभवति स एवार्थोऽर्थनीयः। उपासनाप्रकरणेषु जीवमुख्यप्राणग्रहणे विरोधप्रदर्शनेन यथा तत्परिहाणं परमात्मनश्चोपादानं स सर्व एव प्रकारः कृतसत्कारः पूर्वम्॥ १।४।१७॥

अत्रैव जैमिनिमप्यनुकूलयति—

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैव-मेके ॥१।४।१८॥

तत्तद्वाक्येषूपासनाप्रसङ्गेषु जीवप्राणाकाशादिशब्दजात-मन्यार्थम्। तत्तच्छब्दानां मुख्यार्थपरित्यागपूर्वकतद्भिन्नार्थग्रहणार्थमित्याशयः। तत्तच्छब्दमुख्यार्थभिन्नत्वं च ब्रह्मण एव। अल्पशक्तिं जीवं जडं च परित्यज्यापरिच्छिन्नानन्तशक्तिरजडः परमात्मोपासनीय इति तत्तच्छ्रुत्याशय इति जैमिनिर्मन्यते स्म। तुर्जीवमुख्यप्राणग्रहणपक्षप्रक्षेपार्थः। एवम्, एके—अन्ये चाप्याचार्या भगवद्व्यासात्पूर्वभवास्तत्समसमया वा मन्यन्ते स्म। कस्मात्त एवं मन्यन्ते स्मेति चेत्, प्रश्नव्याख्यानाभ्याम्। प्रश्नश्च व्याख्यानं च ताभ्याम्। विदुषां प्रश्नोत्तरैरेवं ज्ञायते-जडः परमात्मैवोपासनीय इति। वेदेष्वपीदृशः प्रश्नोत्तरवाचः श्रूयन्ते। तथाहि, "यस्य शिरो वैश्वानरश्चक्षुरङ्गिरसोऽभवन्। अङ्गानि यस्य यातवः स्कम्भं तं ब्रूहि कतमः स्विदेव सः॥" (अथ० १०।७।१८) इत्यादिभिर्बहुभिर्मन्त्रैः स्कम्भजिज्ञासा कृता। अत्र शिरश्चक्षुराद्यङ्गानि जीवलिङ्गानि सन्ति तथाप्येतद्वर्णनमन्यार्थ-मेव। तथैवात्र उत्तरम्। "स्कम्भे लोकाः स्कम्भे तपः स्कम्भेऽध्यृत-माहितम्। स्कम्भ त्वा वेद प्रत्यक्षमिन्द्रे सर्वं समाहितम्॥ "इन्द्रे तप इन्द्रेऽध्यृतमाहितम्। इन्द्रं त्वा वेद प्रत्यक्षं स्कम्भे सर्वं प्रतिष्ठितम्॥" "नाम नाम्ना जोहवीति पुरा सूर्यात्पुरोषसः। यदजः प्रथमं सं बभूव स ह तत्स्वराज्यमियाय यस्मान्नान्यत्परमस्ति

भूतम् ॥" (अथ० १०।७।२९-३१) इत्यादि । शिष्यजिज्ञासामुपशमयता भगवता मन्त्रर्षिणा प्रत्युत्तरितं यत्र लोका स्थिता यत्र तपो यत्रर्तं समाहितं तमेवेन्द्रपदवाच्यं स्कम्भं जानीहीति। इन्द्रे लोको इन्द्रे तप इति वदतेन्द्रत्वं स्कम्भान्नातिरिच्यत इति स्फोरितम्। अन्ते च, यत् अजः परमात्मा प्रथमं सं बभूव प्राकट्यमाप स ह तत् सर्वमिदं च स्वराज्यं स्वशासनमियाय प्राप यस्मात्परमेश्वरादन्यत्परमत्यन्तं भूतं सत्यं न अस्तीतिबोधयता तेन पृष्टः स्कम्भो ब्रह्मैवेति स्पष्टीकृतम् । मुख्यप्राणलिङ्गं यथा—'विश्वान्देवानिदं ब्रूमः सत्यसन्धानृतावृधः। विश्वाभिः पत्नीभिः सह ते नो मुञ्चन्त्वंहसः ॥" (अथ० ११।६।१९) इति। अत्रेन्द्रियरूपान्विश्वान्देवान् प्रार्थयमाना उपासका "यूयं विश्वाभिः:सर्वाभिः पत्नीभिर्वृत्तिरूपाभिः सह नोस्मानंहसः पापान्मुञ्चन्तु मोचयन्त्विति"। यद्यप्यत्र मुख्यप्राणादिलिङ्गमेव तथापि जडदेवान्संप्रार्थ्य न कदापि किञ्चित्प्राप्तव्यम् । तेन परमात्मप्रार्थनमेवात्र रहस्यम् । हे परमात्मंस्त्वमेतादृशानुकम्पयानुकम्पयानुकम्प्यानस्मान्यतः पापवृत्तिरूपाभिः पत्नीभिः सहास्माकमिन्द्रियदेवाः पूता भवन्त्वि"त्यत्र तात्पर्यम् ॥१।४।१८॥

अत्रैवान्तिमं हेतुमुपन्यस्यति—

**वाक्यान्वयात् ॥१।४।१९॥**

तत्र तत्र प्रयुक्तानां वाक्यानामन्वयो ब्रह्मण्येव भवति नान्यत्र। इदं सर्वमसकृत्पूर्वं बहुधा गीतम् ॥१।४।१९॥ इति कारणत्वाधिकरणम् ॥४॥

(अथ प्रतिज्ञाधिकरणम् ॥५॥)

"योसावादित्ये पुरुषः सोसावहम्" (शु०य०४०।१७) इत्यत्रादित्यान्तर्यामी यः स एवाहमस्मीति कथनेन लोकस्थितौ प्रतीयमानेपि जीवब्रह्मणोर्भेदे परमार्थतः प्रभातायामज्ञानतमिस्रायां जीवोपि शिवरूपतामेतीत्यभेद एव तयोः सिध्यति न यशस्विनायासेन साधितो भेद इत्यत्राश्मरथ्याचार्यस्य कस्यचिन्मतमाह—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥१।४।२०॥

आश्मरथ्य आचार्यो मन्यते स्म "योसावादित्ये पुरुषः सोसावहम्" "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (शु०य०४०।७) इत्यादिवेदवचनं प्रतिज्ञायाः सिद्धेर्लिङ्गम्। अयमाशयः। "वि ते मुञ्चामि रशनां वि योक्त्रं वि नियोजनम्। इहैव त्वमजस्र एध्यग्ने ॥" (अथ०७।७८।१) इतिमन्त्रे जीवानुद्दिश्य परमात्मा प्रतिजानीते, हे अग्ने कर्मपारतन्त्र्येण बहुषु शरीरेषु गमनशील जीवात्मन्, सर्वशक्तिसम्पन्नोहं परमेश्वरस्ते तव रशनां बन्धरज्जुं मुञ्चामि, तव योक्त्रं बन्धनं वि मुञ्चामि, तव नियोजनं "अस्मिन्देशेस्मिंश्च कालेस्यां च स्थितौ त्वयेत्थं वर्तितव्यम्" इतीदृशं मदाज्ञावर्तित्वं वि मुञ्चामि नाशयामि। इतः प्रारभ्य, अनन्यया भक्त्या परमेण वा ज्ञानेन विगलितबन्धः संस्त्वमिहैवास्मिन् शरीर एवाजस्रोविनाश्य एधि भवेति। जीवानां समाश्रितस्वाश्रयाणां बन्धनविच्छेदाय विधृतप्रतिज्ञो हि परमात्मा वरीवर्ति। तस्य तस्या एव प्रतिज्ञाया सिद्धेर्लिङ्ग

चिह्नमिदम्। महद्भिराराधितैः प्रयत्नैः परमात्मकृपारूपैर्ब्राह्मणोहं क्षत्रियोहं वैश्योहं शूद्रोहं हिन्दुरहं मुसलमानहं खैस्तोहं जारदुस्थोहं वैष्णवोहं शैवोहं शाक्तोहं मूर्खोहं पण्डितोहं धनवानहं निर्धनोहमन्धोहं काणोहं खञ्जोहं द्वैतवादे मे स्पृहाद्वैतवादे मे रतिरित्यादिसर्वबन्धविनिर्मुक्तो भवन्परमप्रसादमनुभवन्पराभवंश्च विषादं सहसा सहास इव वदति जीवो "योसावादित्ये पुरुषः सोहमस्मि" "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इत्यादि। इदमधिवचनमेव लिङ्गं परमात्मनः प्रतिज्ञायाः पूर्तेरिति ॥१।४।२०॥

अत्रौडुलोमेर्मतमुपन्यस्यति—

## उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः॥१।४।२१॥

"इहैव त्वमजस्र एधि" इत्युक्तायाः श्रुतेरिदं तात्पर्यम्। "न सायकप्रणुत्तानां पुनरस्ति निवर्तनम्" (अथ०९।२।१२) इतिन्यायेन प्रारब्धवशादुत्पन्नस्य शरीरस्य कर्मफलभोगक्षयं यावदिहैव त्वमजस्र एधीत्याश्मरथ्यस्य वचो न रुचिरम्। न सायकप्रणुत्तानामितिवाक्यस्यासति प्रतिबन्धके न निवर्तनमित्यत्र तात्पर्यात्। शत्रुणा बलेन प्रक्षिप्तस्य बाणस्य प्रतिपक्षबाणेन विचूर्णितस्य लक्ष्यमनवाप्तस्यैव मध्ये विनाशदर्शनात्। अत उत्क्रमिष्यतः शरीरं परित्यज्य गमिष्यत एव एवम्भावः परमात्मैक्यभावो जीवस्येत्यौडुलोमिः। आश्मरथ्यस्य मते संसारे स्थितस्यापि जीवस्य ब्रह्मभावः। औडुलोमेश्च मते ज्ञानेन भक्त्या वा शरीरस्थितिहेतुभूतकर्मबन्धनविच्छेदादन्यस्य

च कारणस्य शरीरस्थितेरनवस्थानाच्छरीरं परित्यक्ष्यत एव जीवस्यैवंभाव इति। न च त्रिषु कर्मसु मध्ये क्षीणेपि संचितेनुपश्लिष्टेपि क्रियमाणे प्रारब्धं त्ववशिष्यत एव। तद्बलान्न सायकप्रणुत्तानामितिवचनात् प्रारब्धबलेनेहैव स्थितस्य जीवस्य स्याद्ब्रह्मैक्यमितिवाच्यम्। ज्ञानस्य भगवत्या भक्त्याश्च माहात्म्यस्य त्वयाद्याप्यपरिचितत्वात्। तिमिरप्रकाशयोरिव सत्यासत्ययोरिव सदाचारदुराचारयोरिव कर्मफलज्ञानयोः सामानाधिकरण्याभावात्। न सायकप्रणुत्तानामित्यस्यासति प्रतिबन्धक इति शेषान्नीरोगो मार्गः ॥१।४।२१॥

काशकृत्स्नाचार्यस्य मतमुपहरति—

## अवस्थितेरिति काशकृत्स्नः ॥१।४।२२॥

काशकृत्स्न आचार्यो मेने ब्रह्मभावे जीवस्यावस्थितिमात्रं भवति न तु ब्रह्मभावो भवति ततः शरीरं धारयतोपि जीवस्य "योसावादित्ये" इति "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति चानुध्यानमनपहतम्। सुखदुःखहर्षशोकादितानस्त्यानादिभानाभाव इति ब्रह्मभावावस्थितिः। सुखदुःखादीनामत्यन्ताभावो हि ब्रह्मभावः। अत एव योसावित्यत्रादोस्मदोरुभयोः प्रयोगः, एकत्वमनुपश्यत इत्यत्र वर्तमानप्रयोगश्चोपपद्यते ॥१।४।२२॥ इति प्रतिज्ञाधिकरणम् ॥५॥

(अथ प्रकृत्यधिकरणम् ॥६॥)

जीवानामुद्धरणं परमात्मप्रकृतिसिद्धमित्याह—

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥१।४।२३॥

प्रकृतिः स्वभावः। परमात्मनः प्रकृतिरेवैषा स्वाश्रयाश्रितजीवखेदच्छेदविधानं नाम। कुतो ज्ञायत एतत्? प्रतिज्ञादृष्टान्तानुपरोधात्। अनुपरोधोनुरोधः। प्रतिज्ञानुरोधाद्दृष्टान्तानुरोधाच्च। उक्ता हि प्रतिज्ञा "वि ते मुञ्चामि रशना" मित्यादिना। उपस्थाप्यते च दृष्टान्तः। "न वि जानामि यदि वेदमस्मि निण्यः संनद्धो मनसा चरामि। यदा मागन् प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः॥" (अथ०९।१०।१५) इति। कोहमस्मीति न जानामि। कर्मभिरज्ञानेन वा बद्धो मनसा नीतो यत्र तत्र संचरामि। यदा सौभाग्यादृतस्य परमसत्यस्य प्रथमजा प्रथमोत्पादको मा आगन् मामागमन्मां प्राप्तः, आत्, इत्=तदैवास्या वाच आश्वासनगिरो भागं कञ्चिदंशमश्नुवेनुभवामीत्यस्यार्थः। रक्षणं प्रतिज्ञायोपेत्य च स आश्वासयति जीवानित्यनेन मन्त्रेण प्रख्यापयति वेदः। "योसावादित्ये" इति "तत्र को मोहः कः शोक" इत्यादिवचनं च दृष्टान्तरूपेण संग्राह्यमिति ॥१।४।२३॥

अपरं हेतुमाह—

## अभिध्योपदेशाच्च ॥१।४।२४॥

अभिध्याभिध्यानं चिन्तनं चिन्तनफलस्वरूपं रक्षणं च। परमात्मा स्वशरणागतानभिध्यायति चिन्तयति रक्षतीत्यस्योपदेशोपि श्रूयते। तथा हि— "ऋभुश्चक्र ईड्यं चारु नाम विश्वानि देवो वयुनानि विद्वान्। ससस्य चर्म घृतवत्पदं वेस्तदिदग्नी रक्ष-

त्यप्रयुच्छन् ॥" (ऋ० ३।५।६) इति। ऋभुर्मेधावी विश्वानि सर्वाणि वयुनानि प्रशस्यानि कर्माणि विद्वाञ्जानानो देवः परमात्मा ईड्यं प्रशस्यं नाम जीवं चक्रे। नम्यत इति नाम। निघण्टौ जलनामसु नामशब्दः पठितः। वेर्व्याप्तस्य सरस्य सुप्तस्य शान्त्यावस्थितस्येत्यर्थः। तस्य पदं प्रतिपत्तव्यं धर्म रूपं घृतवत्प्रकाशवदस्ति। सोऽग्निः परमात्मा इत् परमात्मैव तत् नाम जीवजातमप्रयुच्छन्नप्रमाद्यन्नविस्मरन् रक्षति पालयतीत्यर्थः। अनेनापि परमात्मप्रकृतिः प्रकीर्तिता। अप्रमाद्यन्नेव स शरणागतान्सततं रक्षतीत्युपदेशादपि ज्ञायते तस्य प्रकृतिस्तथाभूतेति ॥१।४।२४॥

इतोपि तस्य तादृशी प्रकृतिः—

## साक्षाच्चोभयाम्नानात् ॥१।४।२५॥

उभयेषां जीवजडानामाम्नानमुभयाम्नानम्। तस्मात्। उभयेषां किमाम्नातम्? साक्षात्। साक्षात्तस्य परमात्मनः सम्बन्धः। उभयेषां जडाजडानां तेन ब्रह्मणा सह सम्बन्धस्याम्नानादितिसूत्रार्थः। यस्य येन सम्बन्धः स सर्वदा तं परिरक्षत्येव। अनादिकालतः परमात्मना सम्बद्धत्वाज्जडाजडयोः स एव रक्षक इति भावः। "शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः" (ऋ० १०।१३।१) इतिमन्त्रेण सर्वेषां जीवानां तत्पुत्रत्वाम्नानाच्चापि स सर्वदा जीवरक्षायै कृतप्रतिज्ञ इत्यर्थः ॥१।४।२५॥

परमात्मना सह जडाजडयोः कथं सम्बन्ध इत्याह—

**आत्मकृतेः ॥१।४।२६॥**

आत्मनः कृतिरात्मकृतिस्तस्याः। जडाजडौ परमात्मन एव कृतिः। कृती रचना। परमात्मनैवोभयो रचितत्वाज्जन्यजनकरूपः सम्बन्ध इति भावः ॥१।४।२६॥

ननु संभवत्येव नामरूपात्मकस्य जडस्य परमात्मरचितत्वं नित्यस्य जराजन्मादिरहितस्य जीवस्य च तत्कथं संभवेदित्याह—

**परिणामात् ॥१।४।२७॥**

स्थितिपरिवृत्तिर्हि परिणामः। सा च न स्वातन्त्र्येण स्वाभाव्येन वा, कर्मफलभूतदेहद्वारेणैव। देवदत्तदेहेवस्थितः स कदाचिद्बालो देवदत्तः कदाचिद्युवा देवदत्तः कदाचिच्च वृद्धो देवदत्तः। जातो देवदत्तो रुग्णो देवदत्तो मृतश्च देवदत्तः। स एव देवदत्तः कदाचिद्यज्ञदत्तो भवति कदाचिच्च विष्णुदत्तो भवति। एवमेकस्या स्थितेः स्थित्यन्तरं देहद्वारेण गच्छन्हि स परिणामं माप्नुवन्निव निर्दिश्यते। एतादृशपरिणतिकारणं परमात्मैवेति ॥१।४।२७॥

इतोप्युभयोस्तस्य कृतित्वम्—

**योनिश्च हि गीयते ॥१।४।२८॥**

"सतश्च योनिमसतश्च विद्" इतिवेदमन्त्रेण सदसतोरुभयोर्जडाजडयोः परमात्मैव योनिः कारणमिति गीयते ततो

निर्धीयते तयोस्तस्य कृतित्वमिति ॥१।४।२८॥ इति प्रकृत्यधिकरणम् ॥६॥

(अथ सर्वव्याख्यानाधिकरणम् ॥७॥)

## एतेन सर्वे व्याख्याता व्याख्याताः ॥१।४।२९॥

इति श्रीमद्रामानन्दाचार्यैः श्रीमद्व्यासमहर्षिभिः प्रणीते
वेदान्तदर्शने प्रथमेऽध्याये चतुर्थः पादः

एतेनैतावता ग्रन्थेन पादचतुष्टयेन सर्वे व्याख्यातेभ्य आकाशादिशब्देभ्योऽवशिष्टा ये शब्दास्तेऽपि व्याख्याताः। अल्प एव व्याख्याताः। दिग्दर्शनमात्रमेतत्। अनयैव दिशान्येऽपि जीवमुख्यप्राणलिङ्गकाः शब्दा उपासनाप्रकरणेषु व्याख्येया इत्यनुशासनम्। व्याख्याता व्याख्याता इत्यभ्यासोऽध्यायान्तेऽध्यायं समापयतीतिशम् ॥१।४।२९॥ इति सर्वव्याख्यानाधिकरणम् ॥७॥

यथाशक्ति यथाभ्यासं यथाविद्याविभूति वा।
एतन्मया कृतं भाष्यं विदुषां तोषमावहेत् ॥१॥

ज्ञानतन्त्वव्यवच्छित्त्यै नो मया शीलितः श्रमः।
तस्मादत्र प्रवेशोऽस्तु ज्ञानोत्कर्षाभिलाषिणाम् ॥२॥

सतां विद्यावतां प्रत्नरत्नमाहात्म्यवेदिनाम्।
पवित्रेषु करेष्वेतन्मया भाष्यं समर्प्यते ॥३॥

पूर्वजैर्यत्कृतं सत्यं तदेवेतिधियान्विताः।
दूषयन्तु न पत्राणि ग्रन्थस्यैतस्य दुष्करैः ॥४॥

दुर्विदग्धा जगच्छर्मसंवेधपरायणाः ।
मा ग्रन्थं स्प्राक्षुरेतं ते हन्त पण्डितमानिनः ॥५॥
अन्तरं ये न पश्यन्ति मानवा धनधर्मयोः ।
शक्नुवन्ति न विज्ञातुं रहस्यं रस्यमस्य ते ॥६॥
घटं भित्त्वा पटं छित्त्वा रासभारोहणेन वा ।
चिख्यापयिषवो ये स्वाँस्तेभ्यो दूरान्नमोस्तु मे ॥७॥
सुगन्धिकुसुमाकीर्णं लतामण्डपमण्डितम् ।
पुरीषप्रेप्सया नूनं पुरीषाशी विवक्षति ॥८॥
तत्रैव महतां भव्यभाग्यभाजां विपश्चिताम् ।
प्रवृत्तिः केवलं शान्तिसौन्दर्यानुबुभूषया ॥९॥
यियासते मे नवले वर्त्मनि स्खलते क्वचित् ।
दयालुभिर्विशेषज्ञैः करालम्बः प्रदीयताम् ॥१०॥
जयन्तु ते महात्मानः सुधियामग्रगामिणः ।
येषां मनसि सर्वस्वमौदार्यं संप्रवर्धते ॥११॥
जयन्तु शिरसा धार्या गुरुपादरजःकणाः ।
प्रतीक्षन्ते हि साहाय्यदानावसरमत्र ये ॥१२॥

इति सर्वतन्त्रस्वतन्त्र-परमहंसपरिव्राजक-स्वामिश्री-भगवदाचार्यमहाराजैः प्रणीते वेदान्तदर्शनवैदिकभाष्ये प्रथमेऽध्याये चतुर्थः पादः ॥

---

## प्रथमोध्यायः समाप्तः



# वैदिकभाष्ये तट्टिप्पण्यां च
# मानवदौर्बल्यदिग्दर्शनम्

| पृष्ठे | पङ्क्तौ | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १ | ५ (तृतीये श्लोके) | न्मे | न्भे |
| १ | ६ ,, | कन्यया | कन्यका |
| १ | ९ (पञ्चमे श्लोके) | हृदि | हृदि |
| २ | ६ (अष्टमे श्लोके) | सुन्दरा | सुन्दरी |
| २ | १७ | भीहते | मीहते |
| ४ | १७ | सर्वे मी... | सर्वेमी... |
| ५ | ९ | गार्हस्थ्य | गार्हस्थ्य- |
| ६ | १७ | निर्वदवांश्च | निर्वेदवांश्च |
| ७ | ८ | द्रश्यते | दृश्यते |
| ९ | १२ | तैति... | तैत्ति... |
| १५ | ३ | ...र्चन | ...र्चेन |
| १८ | २१ | विद्वांग्ने | विद्वाँ अग्ने |
| १८ | २२ | मन्त्रर्णात् | मन्त्रवर्णात् |
| १९ | १४ | प्रतिरूपस्त... | प्रतिवस्तुरूपस्त... |
| १९ | २१ | द्वारकृत्य | द्वारीकृत्य |
| २५ | १० | ...ह्मणा | ...ह्मणो |
| २९ | ३ | ...न्वस्चय | ...न्वयश्च |
| ३० | २ | ...र्युमे | ...युमें |
| ३१ | १५ | स कर्तृ... | सकर्तृ... |
| ३८ | १० | ...प्रधानं | ...प्रधाना |
| ३८ | ११ | ... ,, | ... ,, |
| ४० | [(३) टिप्पण्याम्] | ...ध्यक्ष: | ...ध्यक्षः |
| ४० | [(५) ,, | ...गात्मनोव | रात्मनोव |

| पृष्ठे | पङ्क्तौ | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ४२ | १० | ...ततस्थु | ...तस्तस्थु... |
| ४५ | [टिप्पण्यां पङ्क्तौ ५] | ...ध्येन्यो | ...ध्येन्यो |
| ४६ | ५ (टि.) | सिद्धिसा... | सिद्धिसो... |
| ४६ | १२ (,,) | मेदः | भेदः |
| ,, | ,, (,,) | स्यामेदोपि | स्याभेदोपि |
| ,, | १८ (,,) | स्यिति | स्थिति |
| ,, | २० (,,) | तोत्यथ | तोत्यर्थं |
| ,, | २३ (,,) | मेब | मेव |
| ४७ | ११ (,,) | बिमेति | बिभेति |
| ४८ | ७ | स्पति | स्पति |
| ,, | १४ | र्थं स्तेन | र्थंस्तेन |
| ४९ | १५ | जगत्त | जगत्तु |
| ५० | ३ | पूर्वका | पूर्विका |
| ५४ | २ | तस्यान्नद | तस्यानन्द |
| ५७ | १२ | दिक्षन्तैव | दिक्षतैव तानि |
| ५८ | १४ | 'बिश्व | विश्व |
| ६४ | ६ | अन्तर्दतो | अन्तर्दूतो |
| ,, | ११ | वर्चयो... | वर्चो... |
| ६५ | ७ | समवा... | सममा... |
| ७० | १३ | ...भिप्रेत | ...भिप्रेतं |
| ७३ | १५ | पार्दाप... | पादोप... |
| ,, | १७ | भत्वादि... | भूतादि... |
| ७८ | २ | प्रतिपदि... | प्रतिपादि... |
| ७९ | १९ | प्रथमा... | प्रथमे... |
| ८० | १२ | दोष | दोषः |
| ८३ | ४ | ...पत्तिः। सिद्धि... | पत्तिः सिद्धिः |

| पृष्ठे | पङ्क्तौ | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ८४ | ४ | न जीव... | न सर्वत्र जीव.. |
| ९० | ४ | अनुपत्यं | अनुषत्यं |
| ९४ | ४ | ...त्रव | ...त्रैव |
| ९५ | १५ | वच–न... | वचन... |
| ९९ | ७ | नस्तापि | नस्तथापि |
| १०२ | २ | ...वाप | ...वोप |
| १०४ | ६ | ...द्वांस्त | ...द्वांसस्त |
| ,, | ८ | ...द्योथः | ...द्योर्थः |
| ,, | ९ | ...त्मनोनन्तर | ...त्मनोन्तर.. |
| १०८ | ५ | ...र्वतीनि | ...र्वर्तीनि |
| १०९ | १३ | ...र्यामि | ...र्यामी |
| १११ | १ | ...त्वष्टत्वा... | ...त्वष्टृत्वा... |
| ११२ | ५ | ...वाथिनो... | ...वादिनो |
| ११९ | ४ | वैश्वानरा | वैश्वानरो |
| १२७ | २२ | ...शुश्रुवत् | ...शुश्रवत् |
| १२८ | ८ | ाह | हि |
| १३० | १९ | ...न्नास्तिः | ...न्नास्ति |
| १३१ | १९ | त | तं |
| १३२ | ९ | शुका... | शुक्रा... |
| १३७ | ६ | चा | च |
| १३९ | १५ | ...क्षर शब्दः | ...क्षरशब्दः |
| १४० | २ | ...जीवाचितां | जीवाचिदादीनां |
| १४३ | १५ | ...पैति | पैतीति |
| १४४ | १९ | ...न्निमार्णे | ...न्निर्माणे |
| १४७ | ५ | उतरम् | उत्तरम् |
| १५२ | १३ | वायो यजु... | वायोर्यजु... |

| पृष्ठे | पङ्क्तौ | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १५६ | ३ | न चेयं | अथ चेयं |
| १५९ | २० | ...कण्रयं | ...करण्यं |
| १६२ | ४ | वियान्नियत... | विद्या नियत... |
| १७० | ७ | प्रथमाध्याये | प्रथमेध्याये |
| १७२ | ८ | शरीरुप... | शरीररूप... |
| ,, | ११ | आसींद्यौः | आसीद्द्यौः |
| १७५ | ५ | सर्वषां | सर्वेषां |
| १८३ | (टि०(१)प०३) | प्रलयिंतति | प्रलायिंतति |
| १९१ | २० | जमिनि... | जैमिनि... |

अन्या अपि चेदवशिष्टा अशुद्धयो विद्वद्भिस्ताः संशोधनीया इति मुहुर्मुहुरभ्यर्थनेति ।



# वेदान्तदर्शनस्य प्रथमाध्यायस्य सूत्रसूचीपत्रम्


| सूत्रगणना | | पृष्ठे |
|---|---|---|
| | (अ) | |
| १ | अक्षरमम्बरान्त० | १३८ |
| २ | अत एव च तद्० | १०३ |
| ३ | अत एव च नि० | १५३ |
| ४ | ,, ,, न देव० | १२० |
| ५ | ,, ,, प्राण: | ६८ |
| ६ | अत्ता चराचर० | ९१ |
| ७ | अथातो ब्रह्म० | २ |
| ८ | अदृश्यत्वादि० | ११२ |
| ९ | अनवस्थितेर० | १०८ |
| १० | अनुकृतेस्तस्य० | १४७ |
| ११ | अनुपपत्तेस्तु न शा० | ८३ |
| १२ | अनुस्मृतेर्वाद० | १२१ |
| १३ | अन्तर उपपत्ते: | १०० |
| १४ | अन्तर्याम्यधि० | १०९ |
| १५ | अन्तस्तद्धर्मोप० | ६४ |
| १६ | अन्यभावव्यावृ० | १३९ |
| १७ | अन्यार्थं तु जैमि० | १९२ |
| १८ | अन्यार्थश्च परामर्श: | १४७ |
| १९ | अपि च स्मर्यते | १४८ |
| २० | अभिध्योपदेशा० | १९७ |
| २१ | अभिव्यक्तेरित्याश्म० | १२१ |
| २२ | अर्भकौकस्त्वा० | ८८ |
| २३ | अल्पश्रुतेरिति चेत्तदु० | १४७ |

| सूत्रगणना | | पृष्ठे |
|---|---|---|
| २४ | अवस्थितेरिति काश० | १९६ |
| २५ | अस्मिन्नस्य च तद्यो० | ६१ |
| | (आ) | |
| २३ | आकाशस्तल्लिङ्गात् | ६७ |
| २७ | आकाशोर्थान्तरत्वा० | १६८ |
| २८ | आत्मकृते: | १९९ |
| २९ | आनन्दमयोभ्या० | ५३ |
| ३० | आनुमानिकमप्ये० | १७२ |
| ३१ | आमनन्ति चैनम० | १२२ |
| | (इ) | |
| ३२ | इतरपरामर्शात्स इति० | १४४ |
| | (ई) | |
| ३३ | ईक्षतिकर्मव्यपदेशा० | १४० |
| ३४ | ईक्षतेर्नाशब्दम् | ३९ |
| | (उ) | |
| ३५ | उत्क्रमिष्यत एवं भा० | १९५ |
| ३६ | उत्तरत्र चैत्ररथेन० | १६० |
| ३७ | उत्तराच्चेदावि० | १४६ |
| ३८ | उपदेशभेदान्नेति० | ७४ |
| ३९ | उभयेपि हि० | १११ |
| | (ए) | |
| ४० | एतेन सर्वे व्याख्याताः० | २०० |
| | (क) | |
| ४१ | कम्पनात् | १६३ |
| ४२ | कर्मकर्तृव्यप० | ८५ |
| ४३ | कल्पनोपदेशा० | १८४ |

| सू० ग० | पृष्ठे |
|---|---|
| ४४ कामाच्च नानु० | ५९ |
| ४५ कारणत्वेन चाका० | १८८ |
| ४६ क्षत्रियत्वावगतेश्च | १५९ |
| **(ग)** | |
| ४७ गतिशब्दाभ्यां तथा हि० | १४३ |
| ४८ गतिसामान्यात् | ५१ |
| ४९ गुहां प्रविष्टा० | ९५ |
| ५० गौणश्चेन्नात्म० | ४१ |
| **(च)** | |
| ५१ चमसवदवि० | १८० |
| **(छ)** | |
| ५२ छन्दोभिधाना० | ७२ |
| **(ज)** | |
| ५३ जगद्वाचित्वात् | १९० |
| ५४ जन्माद्यस्य यतः | १७ |
| ५५ जीवमुख्यप्राण० | १९१ |
| ५६ जीवमुख्यप्राण० नेति चेन्नो० | ७९ |
| ५७ ज्ञेयत्वावचना० | १७५ |
| ५८ ज्योतिरुपक्रमा० | १८४ |
| ५९ ज्योतिर्दर्शनात् | १६७ |
| ६० ज्योतिश्चरणा० | ६९ |
| ६१ ज्योतिषि भावा० | १५८ |
| ६२ ज्योतिषैकेषाम० | १८८ |
| **(त)** | |
| ६३ तत्तु समन्वयात् | २९ |
| ६४ तदधीनत्वा० | १७५ |
| ६५ तदभावनिर्धारणे० | १६० |
| ६६ तदुपर्यपि बाद० | १५० |
| ६७ तद्धेतुव्यप० | ५६ |
| ६८ तन्निष्ठस्य मो० | ४३ |
| ६९ त्रयाणामेव० | १७८ |
| **(द)** | |
| ७० दहर उत्तरेभ्यः | १४३ |
| ७१ द्युभ्वाद्यायतनम्० | १२५ |
| **(ध)** | |
| ७२ धर्मोपपत्ते० | १३७ |
| ७३ धृतेश्च महिम्नो० | १४४ |
| **(न)** | |
| ७४ न च स्मार्तमतद्धर्मा० | ११० |
| ७५ न वक्तुरात्मोपदेशा० | ७८ |
| ७६ न संख्योपसंग्रहा० | १८६ |
| ७७ नानुमानमतच्छ० | १२८ |
| ७८ नेतरोनुपपत्तः | ५७ |
| **(प)** | |
| ७९ पत्यादिशब्द० | १७० |
| ८० परिणामात् | १९९ |
| ८१ प्रकरणाच्च | ९४ |
| ८२ प्रकरणात् | १३४ |
| ८३ प्रकृतिश्च प्रति० | १९७ |
| ८४ प्रतिज्ञाविरोधात् | ४८ |
| ८५ प्रतिज्ञासिद्धेर्लिं० | १९४ |
| ८६ प्रसिद्धेश्च | १४४ |
| ८७ प्राणभृच्च | १३० |
| ८८ प्राणस्तथानु० | ७६ |
| ८९ प्राणादयो वाक्य० | १८७ |
| **(भ)** | |
| ९० भावं तु वादराय० | १५८ |

| सू० ग० | पृष्ठे |
|---|---|
| ९१ भूतादिपादोपदेश० | ७३ |
| ९२ भूमा संप्रसादाद० | १३६ |
| ९३ भेदव्यपदेशा० | ५८ |
| ९४ ,, ,, चान्य: | ६५ |
| ९५ ,, ,, | १३३ |
| (म) | |
| ९६ मध्वादिष्व० | १५६ |
| ९७ महद्वच्च | १८० |
| ९८ मान्त्रवर्णिकमे० | ५७ |
| ९९ मुक्तोपसृप्यव्य० | १२७ |
| (य) | |
| १०० योनिश्च हि गी० | १९९ |
| (र) | |
| १०१ रूपोपन्यासाच्च | ११६ |
| (व) | |
| १०२ वदतीति चेन्न० | १७६ |
| १०३ वाक्यान्वयात् | १९३ |
| १०४ विकारशब्दान्नेति० | ५५ |
| १०५ विरोध: कर्मणीति० | १५१ |
| १०६ विवक्षित० | ८३ |
| १०७ विशेषणभेदव्यप० | ११३ |
| १०८ विशेषणाच्च | ९९ |
| १०९ वैश्वानर: साधारण० | ११६ |
| (श) | |
| ११० शब्द इति चेन्नात:० | १५२ |
| १११ शब्दविशेषात० | ८६ |
| ११२ शब्दादिभ्यो० | ११८ |
| ११३ शब्दादेव प्रमि० | १४८ |

| सू० ग० | पृष्ठे |
|---|---|
| ११४ शारीरश्च | ११० |
| ११५ शास्त्रदृष्ट्या० | ७९ |
| ११६ शास्त्रयोनि० | २३ |
| ११७ शुगस्य० | १५८ |
| ११८ श्रवणाध्ययनार्थप्रति० | १६१ |
| ११९ श्रुतत्वाच्च | ५३ |
| १२० श्रुतोपनिषत्क० | १०४ |
| (स) | |
| १२१ संस्कारपरामर्शा० | १६० |
| १२२ समाकर्षात् | १९० |
| १२३ समाननामरूप० | १५५ |
| १२४ सम्पत्तेरिति जै० | १२२ |
| १२५ संभोगप्राप्तिरिति० | ९० |
| १२६ सर्वत्र प्रसिद्धो० | ८१ |
| १२७ साक्षाच्चोभया० | १९८ |
| १२८ साक्षादप्यवि० | १२१ |
| १२९ सा च प्रशासनात् | १३८ |
| १३० सुखविशिष्टाभि० | १०३ |
| १३१ सुषुप्त्युत्क्रान्त्यो:० | १६९ |
| १३२ सूक्ष्मं तु तदर्हत्वात् | १७४ |
| १३३ स्थानादिव्यप० | १०२ |
| १३४ स्थित्यदनाभ्यां च | १३५ |
| १३५ स्मर्यमाणमनुमानं० | ११७ |
| १३६ स्मृतेश्च | ८६ |
| १३७ स्वाप्ययात् | ४९ |
| (ह) | |
| १३८ हृद्यपेक्षया तु० | १४९ |
| १३९ हेयत्वावचनाच्च | ४४ |

सर्वतन्त्रस्वतन्त्र-परमहंसपरिव्राजक-स्वामिश्रीभगवदाचार्यजी-
महाराजप्रणीत सूत्रप्रसादिनीवृत्तिसहित
श्रीभगवद्व्यासप्रणीत

# वेदान्तदर्शन

## प्रथम अध्याय-प्रथमपाद

न जाने कबसे, परन्तु आर्य जगत्में धर्माचरणमें ईश्वरस्मरण, ईश्वरनिमित्तक दानपुण्यादि क्रियाका समावेश हो चुका है। दान पुण्यादि क्रियाओंका फल तो निश्चय ही है, वह चाहे ईश्वरके नाम परकी जाएँ चाहे दयाकी पवित्र वेदीपर की जाएँ और चाहे मानवताके उच्चकोटिके सिद्धान्तको सम्मुख रख कर की जाएं। जो हो, अब ईश्वरका जगत्में अपना एक नियत स्थान है। वेदोंके निर्माण-कालमें ईश्वर एक अस्थिर और समस्यापूर्ण वस्तु था। वह प्रार्थना करनेसे प्रसन्न होता है, अनिष्टाचरणसे रुष्ट हो जाता है, सबको सब कुछ वही देता है, जिसको वह चाहता है, ऊंचे ले जाता है और जिसे चाहे उसे नीचे ले जाता है, इत्यादि भावनाएं ईश्वरके सम्बन्धमें वेदकालमें थीं वह अब भी वैसी ही और उतनी ही स्फुट हैं। वेदके दार्शनिकोंने ही ब्रह्म, आत्मा, इन्द्र, वरुण, सोम, सूर्य, अग्नि इत्यादि अनेक नाम ईश्वरके शोधे थे। अथर्ववेदके समयमें "ईश्वर" यह भी नाम शोध लिया गया था। वेदोंके मन्त्रोंपर यदि भाष्यकार अपनी बुद्धिका पुट न लगा दे तो प्रतीत होगा कि वैदिक ऋषि इन्द्र, वरुण, सोम, अग्नि आदि देवोंको यज्ञभूमिमें बुलाते थे और उन्हें विश्वास था कि वह देव आते थे। ऋषिगण उनकी

प्रार्थना करता था, स्तुति करता था और संभव है कि समीहित-सिद्धिका भी अभिमान रखता था। इन देवोंके जो धर्म, विशेषण स्वरूप वर्णन किये गये हैं वही सब कुछ ब्रह्म, आत्मा, परमात्मा, परमेश्वरके लिये भी वर्णित हैं। अतः इससे यह भी माना जा सकता है कि अग्नि, इन्द्र, वरुण, सोमादिको वैदिक ऋषि ब्रह्म मानते रहे होंगे। कितने ही ऋषियोंके विचारोंमें क्रान्ति भी हुई और उन्होंने समस्त सृष्टिको ही ब्रह्म बतानेका प्रयास किया। वेदोंमें ब्रह्मके उपासकको बहुत निर्बल भीरु, अयोग्य, अज्ञानी आदि बताया गया है। अतएव उसे सदा ही एक बलवान् अस्त्रशस्त्रधारी, अश्वारूढ, रथारूढ, धनुर्धारी आदि विशेषणवाले ईश्वरकी आवश्यकता पड़ती थी। वेदोंके साक्ष्यसे यह सिद्ध है कि सहस्रों वर्षोंसे ईश्वरका अस्तित्व स्वीकृत हो चुका है तथापि इतना तो मान ही लेना चाहिये कि उसका कोई नियतस्वरूप अभी तक अस्तित्वमें नहीं आया है। परन्तु इस तथ्यको भी छिपाया नहीं जा सकता कि आज समस्त जगत् उस अज्ञात और सर्वदा ही अज्ञेय ईश्वरके आतङ्कके नीचे है। किसीने आज तक उसका साक्षात्कार नहीं किया है, किसीने उससे वार्तालाप नहीं किया है, किसीको अभिशाप वा आशीर्वाद देता हुआ वह कभी भी नहीं सुना गया है तथापि गर्भावस्थासे ही भीरु मातापिताके जो संस्कार मनुष्य-आत्मापर पड़ते रहते हैं उन्हींका परिणाम ईश्वर और ईश्वरका आतङ्क है। लगभग यह वस्तु स्थिर है कि वेद बहुत प्राचीन ग्रन्थ हैं। जगत्के प्राथमिक पुस्तकालयमें वेद ही प्रथम पुस्तक थे। जब कहीं भी, कुछ भी, कोई भी ज्ञानसाधन नहीं था, ज्ञानशाला नहीं थी तब वेदोंका ही साम्राज्य था, उनका ही शासन था, उनका आतङ्क था और उनकी सर्वतोमुखी प्रतिष्ठा थी। आर्योंने जो कुछ सुना—वेदोंसे ही, जो कुछ सीखा—वेदोंसे ही और जो कुछ देखा—वेदोंके दिखानेसे ही। ईश्वर भी

वेदोंकी ही सम्पत्ति है। आर्योंने भागीदार भाईकी सम्पत्तिके समान उसे मनुष्यजातितक पहुँचा दिया। आर्य और म्लेच्छ, स्त्री और पुरुष सब लोगोंको ही ईश्वरका अस्तित्व वेदोंके द्वारा उपदिष्ट हुआ और ईश्वर सिंहासनारूढ बना।

सहस्रों वर्षोंके पश्चात् तत्कालीन विद्वानोंके विचारोंमें क्रान्ति हुई। ईश्वरका एक स्वतन्त्र स्वरूप और स्वतन्त्र लक्षण जाननेकी व्यापक जिज्ञासा लोकोंमें प्रकट हुई। जैमिनि, काशकृत्स्न, आश्मरथ्य, औडुलोमि, बादरि, बादरायण, वामदेव आदि विद्वानोंने अपनी मतिगतिके अनुसार ब्रह्मविवेचना की थी। दर्शनोंका युग आया। सांख्यदर्शन बहुत प्रबल था और विवेचक था। महाभारतसे पता लगता है कि महाभारतके समयमें सांख्यकी वेदोंसे भी अधिक प्रतिष्ठा थी। आज महाकवियोंमें कालिदासके समान उस समय धर्मतत्त्ववेत्ताओंमें सांख्य कनीनिकाधिष्ठित था—अग्रगण्य था। उसके विचार स्वतन्त्र थे। वह ईश्वरका श्रद्धालु नहीं था। उसके जगत्का प्राकट्य और उसका विकास उसके अपने ढंगसे हुआ था। ईश्वरवादियोंको सांख्य असह्य हो चुका था। सांख्यके निराकरणकेलिये प्रयत्न करनेवालोंमेंसे भगवान् व्यास भी एक हैं। सांख्यसिद्धान्तका खण्डन करके ईश्वरास्तित्वको सर्वगत बनाना और ईश्वरोपासनासे विभिन्न लोकोंका दर्शन और अन्तमें परमात्मदर्शनका प्रलोभन देकर सबको ईश्वरानुयायी बनाना व्यासके इस दर्शनका मुख्य प्रयोजन है।

यदि विवादग्रस्त नहीं था तो आजसे यह विषय विवादग्रस्त बन रहा है कि व्यासजीका यह वेदान्तदर्शन उपनिषदोंका अनुयायी है किंवा संहिताओंका। आजकी तिथितक जो भी भाष्य लिखे गये हैं वह सब इस दर्शनको उपनिषदनुयायी माननेवाले हैं। यद्यपि वेदान्तदर्शनके कितने ही सूत्र हैं जो यह स्पष्ट करते हैं कि

व्यासजीकी कृपादृष्टि उपनिषदोंपर भी पड़ी ही थी और उपनिषद् वेदोंसे कुछ अधिक प्रतिष्ठित थीं। परन्तु ऐसा ही व्यासजी भी मानते थे, इस माननेमें कोई भी उचित प्रमाण नहीं है। उपनिषदोंमें गाथाएँ बढ़ी हैं, गाथाओंके द्वारा प्रतिपाद्य विषयको सरल बनानेके अतिरिक्त उपनिषदोंने अधिक कुछ भी नहीं किया है, यह मेरा अपना प्रबल मत है। इसी विचारकी पुष्टिकेलिये मैंने उपनिषदोंको छोड़कर वेदोंके आश्रयसे इस वैदिकभाष्यका संस्कृतमें निर्माण किया है और उसीकी छाया इस सूत्रप्रसादिनी वृत्तिमें है। व्यासजी अपने समयमें वेदोंके सबसे बड़े विद्वान् थे। वह यदि वेदों-संहिताओंको त्यागकर यह मानते हों कि उपनिषद् ही ब्रह्मबोधिकाएँ है, तो इससे बढ़कर वेदोंका अपमान वह नहीं कर सकते थे। वेद यदि सर्वविद्याओंके पुस्तक हैं तो उनमें प्राञ्जल ब्रह्मविद्या होनी ही चाहिये। और यदि वहाँ ब्रह्मविद्या है तो उपनिषद्का ही आश्रय लेनेमें कोई विशिष्ट कारण नहीं है। उपनिषद्की कथाएँ यदि व्यासजीको अपनी ओर खींच सकी हों तो उनका उपयोग अन्य प्रकारसे भी हो सकता था जैसा कि मैंने वैदिक भाष्यमें तथा इस सूत्रप्रसादिनी वृत्तिमें किया है।

व्यासजी अपने अभिमत ब्रह्मका बोध करानेकेलिये "अथ अतः ब्रह्मजिज्ञासा" इस तीन पदवाले सूत्रसे, अथवा "अथ" को पृथक् सूत्र रखकर, "अतः ब्रह्मजिज्ञासा" इस दो पदवाले सूत्रसे ब्रह्मकी जिज्ञासा-ब्रह्मविचारका आरम्भ करते हैं।

## ( अथ ब्रह्मजिज्ञासाधिकरण ॥१॥ )

( १ ) इस प्रथम सूत्रमें अथशब्द मङ्गलवाचक है। किन्हीं विद्वानोंने इसे आनन्तर्यवाचक माना है। उनके मतसे "वेदादिके अध्ययनके पश्चात् ब्रह्मजिज्ञासा करनी चाहिये" ऐसा इस सूत्रका अर्थ होता है। मङ्गलप्रयोजन तो उन्हें भी इष्ट है परन्तु "अथातो

धर्मजिज्ञासा" इस मीमांसा दर्शनके प्रथम सूत्रके अथशब्दको शबरस्वामीने आनन्तर्य अर्थवाला ही माना है अतः मैं समझता हूँ कि इस अथशब्दको भी आनन्तर्यार्थक बनानेका प्रयास किया गया है। यह अनुकरणमात्र है। धर्ममीमांसाकारको धर्ममीमांसाकेलिये वेदाध्ययनकी आवश्यकता अनिवार्य है। शुद्ध-स्पष्ट मन्त्रोच्चारण, स्वरज्ञान, पौर्वापर्य आदि कर्मकाण्डमें सतत अपेक्षित वस्तु हैं। ब्रह्मजिज्ञासाकेलिये वेदाध्ययन तनिक भी अनिवार्य नहीं है। जितने अंशमें वेदाध्ययनकी आवश्यकता मानी या मनायी जा सकती है उतने अंशमें तो ब्रह्मका जिज्ञासु वेदज्ञ होगा ही। यदि न हो तो उपदेशक उसे सिखा सकता है। आज तो ऐसा ही होता है, पूर्वकालमें भी ऐसा ही किया जाता था। केनोपनिषद्का शिष्य यदि वेदाध्ययनसे रहित न होता तो वह उस प्रकारके प्रश्नकर ही नहीं सकता था। साङ्गोपाङ्ग वेदाध्ययन करनेवालेको यदि इतना भी पता न हो कि मन आदिको स्व-स्व-व्यापारमें कौन प्रेरित करता है तो निश्चय ही वेदाध्ययन निरर्थक हो जाता है। यदि वेदाध्ययनसे सार्थ अध्ययन नहीं किन्तु शुकपाठ अपेक्षित हो तो भी वह अध्ययन निरर्थक ही है। शुकपाठमात्र जानकर ब्रह्मजिज्ञासाका कोई अधिकारी नहीं हो सकता। उपनिषदोंसे ब्रह्मका जितना स्वरूप अवगत कराया गया है, उससे अणुमात्र भी न्यून, वेद, अवगत नहीं कराते। प्रत्युत अधिक स्पष्ट, अधिक विस्तृत और अधिक सुगमरीतिसे वेदमाता अपने पुत्रोंको ब्रह्मोपदेश करती है। अतः आनन्तर्यरूप अर्थ माननेकी यहाँ आवश्यकता नहीं है। ऐसा भी नहीं है कि व्यासजीने इससे पूर्व कुछ ऐसा ग्रन्थ लिखा हो जिसमें ब्रह्मविचारसे अतिरिक्त विचार हों अतः यहाँ उन्हें यह कहना पड़ा हो कि "उन सब बाह्य विषयोंके अनन्तर अब ब्रह्मविचार किया जाता है।" यदि किसीको आनन्तर्य अर्थमें ही

आग्रह हो तो यह अर्थ किया जा सकता है कि "ब्रह्मचर्य, गार्हस्थ्य और वानप्रस्थाश्रम पालनके अनन्तर ब्रह्मजिज्ञासा करनी चाहिये।" ब्रह्मविचारकेलिये चतुर्थ आश्रम ही उपयुक्त है। अन्य आश्रमोंमें ब्रह्मविचार केवल नाटकीय वस्तु बन जाता है। अथवा, "विवेक, वैराग्य, इन्द्रियनिग्रह और मुमुक्षा इन चार साधनोंकी प्राप्तिके अनन्तर ब्रह्मजिज्ञासा करनी चाहिये" यह भी अर्थ किया जा सकता है। जिज्ञासा शब्दका अर्थ विचार है। ब्रह्मजिज्ञासाका अर्थ ब्रह्मविचार है। अथ शब्दके दोनों अर्थोंको लक्ष्यमें रखकर सूत्रका यह अर्थ होता है कि "इस ग्रन्थसे ब्रह्मका विचार किया जाता है" तथा "तीन आश्रमोंके पश्चात् संन्यासाश्रममें प्रविष्ट होकर साधनचतुष्टय प्राप्त करके ब्रह्मजिज्ञासा करनी चाहिये।"

ब्रह्मजिज्ञासाका अधिकारी कौन हो सकता है, इसका विचार करना चाहिये। हिन्दूशास्त्रोंमें चारों वर्णोंके पृथक् पृथक् कर्तव्य वर्णित हुए हैं। ब्राह्मणको अमुक कर्म करना चाहिये, क्षत्रियको अमुक, वैश्यको अमुक और शूद्रको अमुक। क्या इसी प्रकारसे ब्रह्मजिज्ञासा भी किसी एक या दो या तीन वर्णोंकेलिये विहित होनी चाहिये अथवा मनुष्यमात्रकेलिये? इसका उत्तर यह है कि ब्रह्मजिज्ञासा मनुष्यमात्रकेलिये है। चारों वर्णोंकेलिये है। यदि कोई वर्णबाह्य हो तो उसे भी ब्रह्मजिज्ञासाका अधिकार है। विशेष-रूपसे संन्यासी ही ब्रह्मविचारका अधिकारी है। संन्यासी वर्णबाह्य होता है। उसका कोई वर्ण होता ही नहीं। वर्णानुसार प्राप्त उसके सम्पूर्ण अधिकार अस्त हो जाते हैं। वर्णोपयोगी-कर्मकाण्डोपयोगी शिखा-सूत्रादिका वह त्यागी होता है। विधि-निषेधसे वह पर हो जाता है। वह जातिके मापदण्डसे मापा नहीं जा सकता। भक्ति-मार्गके मतसे भक्तके कुलपरम्परा प्राप्त गोत्र, वंश, वर्ण सब कुछ छूट जाते हैं। वह अच्युतगोत्रिय बन जाता है। अच्युत अर्थात् भग-

वान् । भगवान्के सगोत्र बननेमें यही तात्पर्य है कि जैसे भगवान्की कोई जाति नहीं, वर्ण नहीं, आश्रम नहीं, वैसे ही भक्त भी इन निरर्थक झंझटोंसे पृथक् हो जाता है। साम्प्रदायिकोंने भक्तोंका बड़ा गुणगान किया है। भगवान्के अनन्य भक्तोंको भगवत्स्वरूप मानकर जाति-पांतिके विचारके विना ही उनकी सेवा-शुश्रूषा, साष्टाङ्गप्राणिपात और उच्छिष्टभोजनका विधान सम्प्रदायाचार्योंने तथा अन्य सामान्यशास्त्रोंने किया है। अतः मनुष्यमात्रको ब्रह्मजिज्ञासाका अधिकार है। यदि कोई मनुष्य विषयलोलुप होगा तो वह स्वयं ब्रह्मजिज्ञासामें प्रवृत्त नहीं होगा। स्वतःप्राप्त ब्रह्मविचारके अधिकारको वह स्वयं छोड़ता है। परन्तु जिसकी उधर प्रवृत्ति है वह अवश्य अधिकारी है। ब्रह्मविचारकी प्रवृत्ति ही अधिकारकी द्योतिका है।

किंच ब्राह्मण, क्षत्रियादि वर्ण कोई ईश्वरप्रदत्त वस्तु नहीं हैं। ईश्वरकीसृष्टिमें उसके लिये कोई स्थान नहीं है। वेदोंमें एक भी ऐसा कोई मन्त्र नहीं है जो यह बताता हो कि ब्राह्मण, क्षत्रिय, वैश्य और शूद्रको ईश्वरने बनाया। वेदोंमें ऐसा भी नहीं है कि अमुककर्म अमुकको ही करना चाहिये। सामान्य आज्ञाएँ वेदोंमें हुई हैं। अपनी २ योग्यताके अनुसार सब अपने कार्यक्षेत्रको ढूँढ़ लेते हैं। वेदोंमें ब्राह्मणादि चारो वर्ण ज्ञानसेवा, बलसेवा, धनसेवा और तनसेवाके सूचक हैं। जो ज्ञानप्रदान करके मानवसमाजकी सेवा करे उसे ब्राह्मण समझना। जो सङ्कटकालमें मनुष्योंकी रक्षा करे अथवा सङ्कटसामग्रीका नाश करता रहे उसे क्षत्रिय समझना। व्यापारादिसे धनार्जन करके समाजको समृद्धिप्रदान करने वालेको वैश्य समझना। शारीरिक पुराषार्थसे समाजकी सेवा करनेवाले अपठित लोगोंको शूद्र समझना। यह सब कल्पनायें भी पीछेकी गयी हैं। वस्तुतः तो प्रत्येकजनको ब्राह्मण भी बनना चाहिये,

क्षत्रिय भी बनना चाहिये, वैश्य और शूद्र भी बनना चाहिये। जगत् में ऐसा ही है भी। मनुष्य विचारवान् प्राणी है अतः सभी मनुष्य ब्राह्मण हैं। थोड़ी बहुत सभी अपनी रक्षा करते हैं अतः सभी क्षत्रिय हैं। अपने जीवनकी सामग्रीको सभी उत्पन्न करते हैं अतः सभी वैश्य हैं। सभी अपनी सेवा कर लेते हैं अतः सभी शूद्र हैं। वेदोंमें जहाँ यह वर्णकल्पना हुई है वहाँ भी ऐसा ही है। एक ही ब्रह्मके अमुक अवयवको ब्राह्मण और अमुक अवयवको क्षत्रियादि कहा गया है। जैसे एक ही ब्रह्मके यह चार अवयव बताये गये हैं वैसे ही प्रत्येक मनुष्यके भी यह चारो अवयव हैं, अङ्ग हैं, धर्म हैं। सभी मनुष्यसमाजके सेवक हैं। कोई भी निन्दास्पद वा घृणास्पद नहीं है। वेदोंमें कहा गया है कि सभी भगगवान्के स्वरूप हैं। वर्णविधान करनेवाले जिस मन्त्रका (शु० य० ३१। १२) आधार लिया जाता है उसी मन्त्रसे यह स्पष्ट है कि सभी भगवान्के शरीर हैं। भगवान्के शरीरमें कोई प्रतिष्ठित अङ्ग है और कोई अप्रतिष्ठित, ऐसा नहीं है। भगवान्के मुखको ब्राह्मण, बाहुको क्षत्रिय, वैश्यको जङ्घा और शूद्रको चरण बताया है। भगवान्के किस अङ्गको अपवित्र या नीच मान सकते हैं? प्रथम पूजा तो भगवान्के चरणोंकी ही होती है। सर्वत्र चरणदर्शन और चरणस्पर्शका उल्लेख है। मुखदर्शन वा मुखस्पर्शका उल्लेख कभी नहीं होता हैं या अतीव अल्प होता है। बाहू और जङ्घाके तो नाम ही नहीं लिये जाते। अतः कोई नीच नहीं, कोई ऊँच नहीं। सब भगवान्के रूप हैं अतः समान हैं। और अतएव सबको समान अधिकार है। धर्मशास्त्रोंमें जो नीच-ऊँचकी भावनाका बीज बोया गया है वह अज्ञानमूलक है। उसने हिन्दूजातिको नष्ट कर दिया। हिन्दूजातिके सर्वोच्च तत्त्व-ज्ञानको कलङ्कित कर दिया। हिन्दूजाति मुख्य चार और गौणरूपसे

अनेक विभागोंमें नीच-ऊँचकी भावनाके साथ विभक्त हो गयी और आज वर्ग-विग्रहकी भूमिका तैयार हो गयी। क्षत्रियकी अवहेलना ब्राह्मण करता है और ब्राह्मणकी अवहेलना क्षत्रिय करता है। इन दोनोंकी अवहेलना वैश्य करता है और वैश्यकी अवहेलना वे दोनों करते हैं। शूद्र इन तीनोंकी अवहेलना करता है और यह तीनों शूद्रकी अवहेलना करते हैं। चारो मिलकर अन्त्यजोंकी अवहेलना करते हैं और अन्त्यज इन चारोंकी अवहेलना करते हैं। परिणाम यह हुआ है कि कोई किसीका मित्र और हितैषी नहीं रह गया और विधर्मियोंने सबको काटना शुरू कर दिया। अतः वर्गविग्रह जगानेका पापभार हमारे पूर्वजोंके शिरपर पड़ा हुआ है। मनुष्यसमाज कलङ्कित हुआ है इसका उद्धार यदि आज न होगा और वही मूर्खतापूर्ण बातें आज लाखों वर्षोंके पश्चात् भी कही, सुनी और सुनायी जावेंगी तो विद्वज्जगत् भारतीय तत्त्ववेत्ताओंके जगत्का अपमान किये विना नहीं रहेगा। सब धर्म समयानुसार होने चाहियें। आज यह कहनेका समय चला गया है कि अमुकको वेदोंका अधिकार है और अमुकको नहीं है। अमुकको ब्रह्मजिज्ञासाका अधिकार है और अमुकको नहीं है। आज तो देखते हैं कि जिन्हें ब्राह्मण कहा जाता है वह चपरासी, पानीपांड़े, रसोइया और मिल-मजदूर हैं। डा० अम्बेडकर अन्त्यज हैं परन्तु वह आज बड़ी धारासभामें सदस्य हैं। अंग्रेजोंने सबको अपना दास बना रखा है। अंग्रेजोंकी दृष्टिमें जितना दासत्व शूद्रमें है उतना ही ब्राह्मण और क्षत्रियादिमें भी हैं। उतना ही हरिजनोंमें भी हैं। अंग्रेजी राज्यने किसीको छोटा गुलाम और किसीको वड़ा गुलाम माना ही नहीं। हाँ, जो उनकी बड़ी २ नौकरियोंमें हैं, जो देशद्रोह करके अंग्रेजी राज्यको तन, मन और पुष्कल धन अर्पण करके रायबहादुर,

दीवानबहादुर, रायसाहब, महामहोपाध्याय इत्यादि डिग्रीधारी बने हैं वह उसके बड़े गुलाम माने जायँ, यह दूसरी बात है। अंग्रेजोंने वेदभाष्य लिखे, वेदोंका विचार किया, वेदोंके अक्षरोंको गिन डाला, वेद, वेदान्त, न्याय, सांख्य, व्याकरण आदि सभी ग्रन्थोंको पढ़कर, समझकर भाषान्तर किया, फिर भी यही कहते रहना कि वेदोंका अधिकार केवल त्रैवर्णिकको है, केवल निर्लज्जता है। उपनिषदोंका फारसी अनुवाद दाराशिकोहने पढ़ा था और उससे उसे उतनी ही शान्ति हुई थी जितनी एक ब्राह्मणको हो सकती है। छान्दोग्योपनिषद्के रैकऋषिको तो वेदान्त और तत्त्वज्ञानसे भी शान्ति नहीं हुई थी। जब राजाने उसे पुष्कल गौवें दीं और अन्न पैदा करनेकेलिये भूमिदान दिया और बच्चा पैदा करनेकेलिये अपनी कन्या दे दी तब वह प्रसन्न हुआ था। रैक तो बहुत ही अयोग्य था तो भी उपनिषद्में उसकेलिये प्रतिष्ठित स्थान मिला है। यह सब विचारदोषके फल हैं। ब्रह्मजिज्ञासामें सबका अधिकार है।

अब यह विचारना है कि जिस ब्रह्मकी जिज्ञासाका उपदेश हुआ है वह ब्रह्म क्या वस्तु है? उसका स्वरूप क्या है? वह निर्विशेष है? अथवा सविशेष? कोई कहते हैं कि ब्रह्म निर्विशेष ही है सविशेष नहीं। क्योंकि मुण्डकोपनिषद् ( १।१।६ ) में कहा गया है कि उसके हस्त-पादादि नहीं हैं, चक्षु और श्रोत्र भी नहीं हैं अर्थात् वह कर्मेन्द्रियों और ज्ञानेन्द्रियोंसे रहित है। सर्वव्यापक है, अत्यन्त सूक्ष्म है और नित्य है। मुण्डकमें ही ( २।२।९ ) उसे निष्कल कहा गया है। श्वेताश्वतर उपनिषद् ( ६।१९ ) में भी उसे निष्कल, निष्क्रिय और निरञ्जन कहा गया है। शुक्ल यजुर्वेद ( ४०।८ ) में भी उसे अशरीर कहा गया है। किसीका मत है कि वह सविशेष है। ऋग्वेद ( १।१६४।४६ ) में कहा गया है कि

इन्द्र, मित्र, वरुण, अग्नि, गरुत्मान्, यम और मातरिश्वा सब ब्रह्म ही हैं। इनसे अतिरिक्त ब्रह्मका कोई स्वरूप नहीं है। सर्वजगत् ही ब्रह्म है। जगत् निर्विशेष नहीं है, सविशेष ही है। कितने ही यह कहते हैं कि दोनों प्रकारोंके प्रमाण प्राप्त हैं अतः वह निर्विशेष भी है और सविशेष भी।

तत्त्ववेत्ताओंका मत है कि ब्रह्म तो मन और वाणी तथा प्रमाणोंसे पर है। अतः न वह निर्विशेष है और न सविशेष। यह मनमाने उत्पन्न किये गये शब्द हैं जो कलहके मूल और तत्त्वज्ञानके विरोधी हैं।

एक दूसरा विचार यह है कि वह ब्रह्म वैदिक है? अथवा ब्राह्मण है? अथवा औपनिषद है? वेदमें निरूपित ब्रह्मको वैदिक ब्रह्म कहते हैं। ब्राह्मणग्रन्थोंमें वर्णित ब्रह्मको ब्राह्मण ब्रह्म कहते हैं। उपनिषदोंमें प्रतिपादित ब्रह्म औपनिषद ब्रह्म कहा जाता है। वैदिक ब्रह्म तो जगद्रूप है अर्थात् अन्न-जल-अग्नि इत्यादिस्वरूप ही है। वह सर्वविदित है। उसकी जिज्ञासा निरर्थक है। ब्राह्मणग्रन्थ भी वेदरूप ही हैं। अतः यदि वह ब्रह्म वैदिक है तो ब्राह्मण भी है, यह स्वतः सिद्ध है। शेष रहा औपनिषद ब्रह्म। वह दो प्रकारका है अद्वैत और विशिष्टाद्वैत। विशिष्टाद्वैतसम्प्रदाय जीव-ब्रह्म-भेदवादी है। अतः अन्य सभी भेदवादियोंका संग्रह विशिष्टाद्वैतमें ही मान लेना चाहिये। यह सब प्रश्न और विचार भी अज्ञानमूलक ही हैं। ब्रह्म वेदको कहते हैं। ब्रह्म ( वेद ) का व्याख्यान ब्राह्मण कहा जाता है। ब्राह्मणग्रन्थ याज्ञवल्क्य आदि ऋषियोंके द्वारा बनाये गये हैं। वेदको अपौरुषेय माना जाता है। किसी ग्रन्थके व्याख्यान मूलग्रन्थस्वरूप नहीं माने जा सकते। व्याख्यानमें व्याख्याताके अपने ही अधिकसे अधिक विचार रहते हैं। व्याख्याताके विचारको मूलग्रन्थका विचार मानकर बहुत बड़ी भूल करनी है। इस भूलका

फल आज प्रत्यक्ष है। यह स्मरणमें रखना चाहिये कि न तो वैदिक ब्रह्म केवल जगद्रूप है और न ब्राह्मणब्रह्म वैदिकब्रह्मसे गतार्थ होता है। ब्राह्मणोंकी एक निराली पद्धति है जिसका उपयोग वह किसी भी वस्तुके वर्णनमें करते हैं। रह गयीं उपनिषद्। उपनिषद् कोई भी स्वतन्त्र नहीं हैं। कोई वेदमेंसे और कोई ब्राह्मणोंमेंसे उत्पन्न हुई हैं। ईशावास्योपनिषद् शुक्ल यजुर्वेदका ४० वां अध्याय है। सामवेदके जैमिनीयोपनिषद्-ब्राह्मणके अन्तर्गत केन उपनिषद् है। कठ, मुण्डक, माण्डूक्यके कुछ स्वतन्त्र भाग हैं और कुछ संगृहीत भाग हैं। तैत्तिरीयोपनिषत् तैत्तिरीय आरण्यकका एक भाग है। ऐतरेय उपनिषद् ऐतरेय आरण्यकका चतुर्थ, पञ्चम और षष्ठ अध्याय है। छान्दोग्य उपनिषद् सामवेदीय ताण्ड्यमहा-ब्राह्मणका अन्तिम भाग है। बृहदारण्यक उपनिषद् शतपथब्राह्मण की प्रसूति है। इस विवरणसे यह निष्कर्ष निकला कि जो उपनिषद् साक्षात् वेदप्रसूता हैं और जो ब्राह्मणोंके भाग हैं, उन सबको वेदका ही अनुसरण करना चाहिये। वेदसे स्वतन्त्र होकर यदि उपनिषद् कुछ कहेंगी तो वह वैदिक सिद्धान्त नहीं माना जा सकता। वैदिक-सिद्धान्त वही हो सकता है जो चारों संहिताओंसे प्रति-पादित होता हो। यह मान ही लेना चाहिये कि उपनिषद्का ब्रह्म वही ब्रह्म है जो वेदोंका। उपनिषदोंके व्याख्याता अपने विचारोंको भी औपनिषद बनानेका प्रयत्न करें यह पृथक् वस्तु है।

उदाहरणकेलिये वैदिक ब्रह्मके स्वरूपका निरूपण करनेवाले ऋग्वेदके कुछ मन्त्रोंका अर्थ यहाँ लिखा जाता है। गौतम ऋषिने ऋग्वेदमें अपने शिष्यसे कहा कि "सर्वप्राणियोंका और तेरा भी कल्याण करने वाला, स्वयम् अविनाशी होकर सबको विनाशसे बचाने वाला बन्धु कौन है? तू कौन है? और तेरा आधार क्या है? इस मन्त्रमें तीन प्रश्न हैं। तीनों प्रश्नोंका जो उत्तर हैं वही ब्रह्म

हैं। तेरा बन्धु जो है वही ब्रह्म है। तू कौन है ? इस प्रश्नका उत्तर होगा कि मैं ब्रह्मोपासक हूँ, ब्रह्मका धार्य हूँ, ब्रह्मका रक्ष्य हूँ इत्यादि। इससे यह सिद्ध हुआ कि तू जिसकी उपासना करता है, तेरा जो धारणकर्ता और रक्षक है, वही ब्रह्म है" (ऋ० १।७५।३)। परुच्छेप ऋषि कहते हैं कि "हमारे और तुमारे इष्टलाभके लिये मैं ब्रह्मकी कामना करता हूँ। वह ब्रह्म प्रकाशस्वरूप है, अजरत्व, अमरत्व अनादिता आदि धर्मोंसे जीवके सदृश ही ख्यातिवाला है, सर्व-व्यापक क्षमावान्, चिदचिद्विशिष्ट, ऊर्ध्वगति प्राप्त करनेमें आने वाले विघ्नोंका विनाशक, और मोक्षदशामें भी मुक्त जीवोंके साथ वर्तमान रहता है। उस ब्रह्मको जो प्राप्त करता है उसे कामक्रोधादि कोई भी शत्रु व्यथित नहीं बनाते" (ऋ० १।१२९।४) "जो सम्यग् ज्ञान, सम्यक् चारित्र आदिसे विभूषित हो, तथा बहुश्रुत हो ऐसे शिष्यका वरण करके उसे ब्रह्मोपदेश देना चाहिये। उपदेष्टव्य ब्रह्म का स्वरूप क्या है, इस प्रश्नके उत्तरमें कहा गया कि जो अनादि और अनन्त है, सर्वका प्रियकर है अत एव सर्वका प्रेमपात्र है, सर्वको शान्ति देनेवाला है तथा सर्वजीवोंके आनन्दके लिये जिसने यह पृथिवी बिछा रखी है वह ब्रह्म है" (ऋ० ५।८५।१)। "समस्त विश्वका विधाता, महान्, प्रकाशमान, अविनाशी विघ्नोंके विनाशके लिये बलप्रदान करनेवाला, जिसके समर्थ उपासक हैं, सुन्दरगति देने वाला, सबको सन्मार्गमें ले जानेवाला वह स्तुत्य ब्रह्म तुमारी रक्षाके-लिये तुम्हारे समीपमें ही सदा रहे (ऋ० ६।१७।१३) इत्यादि मन्त्रोंमें ब्रह्मको सबका बन्धु, सबका धारणकर्ता, क्षमाशील, युक्=चिदचिद्विशिष्ट, गभीर, प्रियकर, पृथिवीका कारण, जगत्कर्ता, आदि कहा गया है। इससे वैदिक ब्रह्म सविशेष ही है निर्विशेष नहीं।

इति ब्रह्मजिज्ञासाधिकरण ॥ १ ॥

